# आगम-मीमांसा

[ वैष्णव-शैव-शाक्तागमानामैतिहासिक-दार्शनिक-
सांस्कृतिक-स्वरूप-विवेचिका ]




लेखक :—

पं० व्रजवल्लभद्विवेदः

वाराणसेय-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
साङ्ख्य-योग-तन्त्रागम-विभागाध्यक्षचरः

श्रीलालबहादुरशास्त्री केन्द्रीय संस्कृत विद्यापीठम्
नई दिल्ली

SHRI LAL BAHADUR SHASTRI KENDRIYA SANSKRIT
VIDYAPEETHA • NEW DELHI

संस्कृत-विद्यापीठ-ग्रन्थमालायाः ४० तमं पुष्पम्

# आगम-मीमांसा

[ वैष्णव-शैव-शाक्तागमानामैतिहासिक-दार्शनिक-सांस्कृतिक-स्वरूप-विवेचिका ]




लेखकः —

पं० व्रजवल्लभद्विवेदः

वाराणसेय-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
साङ्ख्य-योग-तन्त्रागम-विभागाध्यक्षचरः

□

प्रधान-सम्पादकः —

डॉ० मण्डनमिश्रः, आचार्यः

□

सम्पादकः —

डॉ० रुद्रदेवत्रिपाठी, आचार्यः

□

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्री–केन्द्रीय–संस्कृत–विद्यापीठम्**

शहीदजीतसिंहमार्गः, कटवारिया सराय, नई दिल्ली-११००१६

# विषयानुक्रमणिका

## प्रधान-सम्पादकीयम्

"**श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठं**" भारतस्य राजधान्यां **दिल्ली**महानगर्यां विराजमानं भारतीयसंस्कृतिसंस्कृत पुरातनं गौरवं रक्षितुकामं कामं सचेष्टं विद्यत इति विदन्त्येव विपश्चिदपश्चिमाः। अस्य नानाविधासु गौरववर्धिकासु प्रवृत्तिषु **'शारद-व्याख्यानमाला'**-समायोजन-प्रवृत्तिरपि चिरात् स्वस्तिमती विद्योततेतमाम्। अस्यां व्याख्यानमालायां न केवलं स्वदेशीया एव विद्वांसः, अपितु वैदेशिका अपि संस्कृतसाहित्यानुसन्धानपरायणाः पण्डितप्रवरा अपि स्वीयैः प्रमुखगवेषणात्मकैरभिभाषणैरस्मानुपाकार्षुः। इति सत्यमेव महद्गौरवात्मकं सौभाग्यं विद्यापीठस्य।

अस्यामेव परम्परायां वर्षेऽस्मिन् **महामहोपाध्याय-पण्डित-श्रीगिरिधरशर्म-चतुर्वेदमहाभागानां जन्म-शताब्द**मभिलक्ष्य समायोजितायां विशिष्टव्याख्यानमालायां 'वाराणसेय-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य' सांख्ययोगतन्त्रविभागाध्यक्षचरैः **पण्डितवर्य-श्रीव्रजवल्लभद्विवेदमहाभागैः** आगममीमांसाविषयमधिकृत्य व्याख्यानत्रयी वितरिता। सैव भाषणत्रयी विद्यापीठात् प्रकाशनं प्राप्नुवत्यास्त्रैमासिकानुसन्धानपत्रिकायाः **शोध-प्रभायाः** षष्ठवर्षस्य द्वितीयेऽङ्के प्रकाश्य प्रसिद्धिमानीता कालान्तरेऽपि पत्रिकेतर-ग्रन्थाध्ययनरसिका आगम-मीमांसाया ज्ञानामृतं पायं पायममन्दानन्दतुन्दिलतामनुविन्देयुरिति भावनया लघुग्रन्थरूपेण प्रकाशितेयम् **'आगम-मीमांसा'** सर्वेभ्यः पाठकेभ्यः रुचिकरी भविष्यतीति निरन्तरं विश्वसिमि।

शोधप्रभायाः सम्पादने प्रकाशने च दत्तावधानेन डॉ० रुद्रदेवत्रिपाठिना अस्या पुस्तिकायाः सुसम्पादने मनोयोगपूर्वकं यः श्रम आहितः सनितरां श्लाघनीयो धन्यवादार्हश्चेति विज्ञाप्य व्याख्यातृभ्यः कृतज्ञतां ज्ञापयन् भूयोभूयः संस्कृतसाहित्य-सेवानुष्ठाने सर्वेषां सुधियां सहयोगं कामये।

३१ जुलाई, १९८२ ई०

**—डॉ० मण्डनमिश्रः**
प्रधानसम्पादकः

# विमर्श-वेदिका

## [ सम्पादकीया ]

आगमाः किल भारतीयसंस्कृतेः कुञ्चिकारूपाः सन्ति। आगमज्ञानं विना निगमानां वास्तविकं ज्ञानमपि न सम्भवमिति तत्त्वज्ञानां विपश्चिद्वराणां स्वानुभवः। यतो हि तन्त्रेषु आगमेषु च समागताः पारिभाषिकाः शब्दा वेदेभ्यो यथावद् गृहीताः सन्ति। आगमशास्त्रं तन्त्ररूपत्वात् सर्वेष्वपि सम्प्रदायेषु पूर्णरूपेण लोकप्रियतां प्राप्नोत्। किन्तु साम्प्रतं शब्दोऽयं केवलं केषुचिदेव क्षेत्रेषु परिचितो विलोक्यते तस्मादेवास्य पठनं पाठनञ्च निरन्तरमुपेक्षा-पदवीं गतमस्ति। आगमानां शुद्धं सैद्धान्तिकं पक्षं यावत् जना नावगच्छन्ति तावत् वेदानां तत्त्वं हृदयङ्गमं कर्तुं न पारयन्ति। इदानीमागमानां शुद्धां वैदिकीं साधनापद्धतिं विस्मृत्य जनाः प्रायेणासुरीं तन्त्र-पद्धतिमेव परिचिन्वन्ति सात्त्विकांश्च भावान् धारयन्तो भक्ताः साधका वा तत्र-तत्र वैमत्यमपि तस्मादेव प्रकटयन्ति। इति हन्त !

आगमानां पारिभाषिकाः शब्दाः लौकिक्या दृष्ट्या भ्रममुत्पादयन्तो दृष्यन्ते, ऐतेषाम-विवेकपूर्ण उपयोगः पथो भ्रंशयितुं शक्नोति परं यथार्थरूपेण यदि ज्ञानं सम्पाद्येत तदा लौकिक-पारलौकिक-कल्याणसिद्धये समुपकल्पेत। आगमा निगमाश्च परस्परं पूरकाः। कलौ प्राणि-नामभ्युदय-निश्रेयससिद्धिर्यादृशी सरला सद्यः फलदायिनी चागमेभ्यो लभ्यते न तथान्येभ्यः साधनेभ्यः। यथोच्यते प्रपञ्चसारतन्त्रेण—

**'श्रुत्युक्तस्तु कृते धर्मस्त्रेतायां स्मृतिसम्भवः।**
**द्वापरे तु पुराणोक्तः कलावागम-सम्भवः ॥' इति**

आगमोक्ता समाराधना सद्यः सिद्धयति इति प्रसिद्धिः सत्यमेव हितावहा। आगमाना-मुद्देश्यमपि सर्वसाधारणेभ्यस्तेषां क्षमतानुसारं स्वल्पेन समयेनाभ्युदय — निश्रेयसयोः पथो विशदी-करणं विद्यते। अत एव ह्यागमानां कर्मोपासनाज्ञानकाण्ड—सम्बन्धिनो विषया वैज्ञानिका दार्शनिकाश्च सन्तोपि षट्कर्मसाधन-ध्यानयोगचतुष्टय-प्रभृतिकान् व्यावहारिकान् विषयानपि निरूपयन्ति। एवं सत्यपि सर्वमप्यागमशास्त्रीयं ज्ञानमन्तर्दृष्ट्याऽध्ययनस्यापेक्षां धारयति। आगमेषु स्वनाम्नो व्युत्पत्त्यनुसारं सृष्टिप्रलयादि-सम्बद्धानि शुद्धानि दार्शनिकानि तत्त्वानि बहुधा प्रकाशितानि वर्तन्ते। निगमागमयोः कर्ता एक एव परमेश्वरः, अत आगमा अपि निगमानामिव स्वतन्त्राः सन्ति। **'ऋषयो मन्त्रद्रष्टार'** इति वाक्ये यथा ऋषयो मन्त्राणां साक्षात्कर्तारः प्रतिपादितास्तथैव **'शिवादि ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः'** इति वचनानु-सारमागमा अपि साक्षात्कृता एव न तु निर्मिताः। यथा च **'मन्त्रब्राह्मणयोर्वेद-इति नामधेयं'** इति वेदानां लक्षणं मीमांसकैः स्पष्टं व्यधायि तथैव तन्त्रकारा अपि **'अविगीता प्रसिद्धिरागम'**

इति कथनेनागमानां लक्षणं व्याचख्युः ।

**प्रसिद्धिरागमो लोके युक्तिमानथवेतरः ।**
**विद्यायामथाविद्यायां प्रमाणमविगानतः ॥**
**प्रसिद्धिरविगीता हि सत्य वागैश्वरी मता ।**
**तथा तत्र यथासिद्धं तद्ग्राह्यमविशङ्कितैः ॥**

आगम—शब्दोऽत्यन्तं व्यापकः। प्रायः सर्वेषु शास्त्रेषु प्रमाणिकसिद्धये आगम शब्दो व्यवह्रियते। **'त्रिपुरा-रहस्ये'** वेदो ह्यागमभागः स्याद् शब्दराशिरथागमः प्रोक्तं वचनमिदं समस्तः शब्दराशिरेव आगम इति प्रतिपादयति किञ्चाभिनवगुप्तपादाचार्यास्तु—"आगमस्तु अनवच्छिन्नमाहेश्वरप्रकाशपरमार्थं' इति संलक्ष्य आगमानां प्रामाण्यमनवच्छिन्नं घोषयन्ति। आगमा एव सर्वविद्यानां जन्मभूरित्यपि बहुत्र प्रोक्तम्। मनुस्मृतेः कुल्लूकभट्टकृतायां टीकायां **"वैदिकी तान्त्रिकी चेति द्विविधा श्रुतिरुच्यते"** इति वचनेन आगमाः श्रुतिसंज्ञयाऽपि सम्बोधिताः। इत्थं **'आसमन्ताद् अर्थं गमयति'** इति व्युत्पत्त्या तथा—

**आगतं शिव-वक्त्रेभ्यो गतं च गिरिजाश्रुतौ**
**तदागम इति प्रोक्तं शास्त्रं परमपावनम् ॥**

इति शारदातिलकीय-परिभाषया तथा महर्षिहारीतवचनानुसारं **"आगमः पञ्चमो वेदः कौलस्तु पञ्चमाश्रमः'** इत्यादिनाऽनवच्छिन्नधारया "सम्प्रदायाविच्छेदे सति अस्मयर्यमाणकर्तृकत्वम्" निगमस्वरूपमिव आगमा अपि अपौरुषेया एवेति स्वीकरणे नास्ति कश्चन शङ्कावकाशः।

आत्मसाक्षात्कारः सहजतया यद् उपदिश्यते तत एव आगमा इत्यपि न विस्मर्तव्यम्। यथा वैज्ञानिकः स्वीयायां प्रयोगशालायां स्वकीयध्येयस्यापूर्तये निरन्तरं प्रयस्यन् सांसारिकानि सर्वाण्याकर्षणानि पराकृत्य दुस्साध्यमपि परिश्रमं संसाधयति तथैवागमोक्तदिशाऽप्याध्यात्मिक्यां प्रयोगशालायां ब्रह्मनिष्ठस्य गुरोः साहाय्येन साधकः सन्ततं प्रयस्यात्मज्ञानं सारल्येन प्राप्तुमर्हतीति निश्चप्रचम्। आगमोक्तेन योगेन मन्त्रशक्त्या च ब्रह्मविद्यास्वरूपिणीं कुण्डलिनीं प्रबोध्य जीवात्मानं परमात्मना सहैकत्व-बोधस्य-मार्गो दर्शितः। किंवाऽन्येषु शब्देषु जीवात्मानं जन्मबोधात् समुत्पन्नाहंकारात् पूर्णतया विमोच्य शुद्ध-बुद्ध-मुक्त-नित्यस्य परमात्मनः स्वाभाविकैश्वर्येण सम्पन्नं ज्ञानस्वरूपं भवितुं तस्मै मार्गो दर्शितः। वस्तुत आगमानां विषयो गहनो जटिलश्च विद्यते। साधारणा जनाः शास्त्राणां रहस्यमविज्ञायैव तानि निन्दनीयानि मन्वते। आगमोक्तायाः साधनायाः पार्श्वद्वयं विद्यते (१) विश्वविज्ञानं तथा (२) वैश्वबन्धनात् त्राणम्। प्रथमं विना द्वितीयं नोपपद्यते, एतद्ज्ञानं विना साधना सिद्धेः पदं यावत् न प्राप्नोति। प्रणवः, बीजं, कूटः, अक्षरं चैतेषां विशिष्टं संयोजनं तथा पल्लवादयो मन्त्रस्य स्थूलान्यङ्गानि सन्ति परं तस्य स्वरूपं ध्यानं शक्तिर्गतिः क्रियाकारित्वं चेत्यादीनि तानि सूक्ष्माणि सशक्तानि च तत्त्वानि सन्ति येभ्योऽभिव्यक्ता शक्तिर्विश्वरहस्यमुद्घाटयति। अस्य निश्चितपरिणामस्योपलब्धय एवागमशास्त्राणां विधिनिषेधा अस्माकं मार्गदर्शनाय दीपस्तम्भसदृशाः सन्ति।

इत्थं बहुधा विचारसञ्चार-सम्पन्नायामागमशास्त्रपरम्परायां प्रवर्तमाना विभिन्ना धारा अपि विमर्शणीया भवन्ति। कस्तावदागमानामितिहासः? कीदृशश्च विकासः? कास्का धाराः के के सम्प्रदायविशेषाः? पुराणस्मृतिसाहित्यधर्मशास्त्रस्थापत्यमूर्तिचित्रकलासंगीतादिषु

कियतांशेन कुत्र-कुत्र सहयोग इति सर्वेषां प्रश्नानां समाधानाय सत्यमेवागमानां मीमांसाऽत्या-वश्यकी वर्तत इति कृत्वा प्रस्तुता **"आगम-मीमांसा"** अतीवोपयोगिनी सामयिकी सारल्येन सम्बोधयित्री च भविष्यतीति **"दिल्लीस्थ-श्री लाल बहादुरशास्त्री-केन्द्रीय-संस्कृत**-विद्यापीठद्वारा प्रतिवर्षं सम्पाद्यमानायां 'शारदव्याख्यानमालायां' विद्वद्वर-श्रीव्रजवल्लभद्विवेदशास्त्रि-महाभागैः समभिभाषितानां त्रयाणां व्याख्यानानां संकलनरूपा पुस्तिकेयं प्रकाशनपदवीमानीता ।

अस्यां क्रमशो १. वैष्णवागममीमांसा २. शैवागम-मीमांसा ३. शाक्तागममीमांसारूपेण त्रिधा विभज्यागमानां सामान्यविवेचनेन सह प्रत्येकमागमस्य स्थितिः, भेदाः, प्रभेदाः, प्रवर्तकाः संहिताग्रन्थाः (मुद्रिता अमुद्रिताः) प्रमाणपुरस्सरं स्वदेशीयानां वैदेशिकानां च विचारश्रेण्या परिचायिताः। एते आगमाः कुत्र कथं केन चर्चिताः केषु केषु ग्रन्थेषु पुराणेषु भक्तिशास्त्रेषु वा सम्प्रदायविशेषेण सम्मानिताः संसूचिताः समुपोद्वलिताश्चेति मीमांसमानेन विदुषा स्वीयस्य दीर्घकालिकागमतन्त्र-मन्त्रयन्त्रसम्बद्धानां प्रकाशिताप्रकाशितानां ग्रन्थानामालोडन-विलोडनपूर्वकं स्वाध्यायाध्यवसायस्य सारः समुपस्थापितः। अत्रैव तेषु तेष्वागमेषु कीदृशं वाङ्मयं सम्प्रति प्राप्यते कुत्र च तेषां प्रचारः प्रसारः पूजापद्धतौ समाराधने च व्यवहार इति विवेच्येदमपि निर्दिशितं यद् भारतीयाः कान् कान् सम्प्रदायाननुतिष्ठन्तीति ।

प्रत्येकमागमस्य स्वतन्त्रं दर्शनं विद्यते । प्राचीना आचार्याः सर्वदैवोपासनाकाण्डं ज्ञानकाण्डेन समन्वेत्यैव स्वीयामाराधनां समपादयन् तत्र च बाह्ययागान्तर्यागयोः साधनां विभज्य सोपानपरम्परया सिद्धये प्रायतन्त । तदिदं दर्शनदर्शनं विधाय तेषामेवागमानां यौगिक्यः परम्परा धारणाः क्रमः प्रक्रमो मन्त्रात्मिका साधना च स्पष्टमुपपादिताः ।

इतिहासः साम्प्रतं गवेषकेभ्यो गव्यमिव परमप्रियः। अनुसन्धानविधौ धुरि कीर्तनीयानां म० म० पं० गोपीनाथकविराजमहाभागानां सान्निध्येन प्रावीण्यमुपगतानां श्रीद्विवेदमहोदयानां कौशलमत एवात्र साधु प्रकटितम् । प्रायः प्रतिपृष्ठं विद्यमानाष्टिप्पण्योस्य निदर्शनतामावहन्ति तत् सुधीभिस्तत एवावगन्तव्यम् ।

आगमानामानन्त्यं लुप्तागमसंग्रहविविधतन्त्रागमग्रन्थ-सम्प्रदायविशेष-परम्पराभिरव-गम्यैव सामस्त्येन कथयितुं शक्यते यत् पूर्णतयाऽऽगमानां परिचायनमतीवदुष्करं कर्म विद्यत इति । अत एव विपुलार्थविज्ञानसम्पन्नेनापि विदुषा श्रीमता शास्त्रिवरेण सौरागमगाणपत्यागमयोः संक्षिप्तापि चर्चा नात्र समुत्थापिता । उपासकस्य चित्तावतरणसिद्धये कर्मकाण्डसंवलिताया उपासनापद्धतेः पूजाप्रयोगविधानस्य च विवरणं नाङ्गीकृतम् । यद्यपि बहवः प्रज्ञावन्तः प्रथमं बाह्ययागविधानेन साधकस्यागमोक्तान्तर्यागप्रवेशयोग्यतां साध्वीं प्रतिपादयन्ति किञ्च तामेव पूर्वं साधयितुं प्रेरयन्ति तथापि तद्विषये स्वल्पसङ्केतं दत्त्वैवात्र यत् संक्षेपितं तत्र समयाभावमेव कारणं मन्ये । एतदर्थं कदाचिद्-'आगम-प्रयोग-मीमांसा' अपि व्याख्यातव्या प्रकाश्या च विद्यत एव । एवमेव जैनागमानां[1] बौद्धागमानां मीमांसे अपि विद्वद्भिः स्वतन्त्ररूपेण विमर्शणीये स्तः ।

अस्तु **आगम-मीमांसेयं** सर्वानापि पाठकान् ज्ञानप्रदानेन सन्तोषयेदिति सम्भाव्य लेखकमहानुभावं च धन्यवादैरभिनन्दयामि ।

—**डॉ० रुद्रदेवत्रिपाठी**

---

१. एतद्विषये 'जैन आगम और तत्सम्बन्धी मान्यताएं' तथा मन्त्रशक्ति-तन्त्रशक्ति-यन्त्र-शक्तिग्रन्थानां भूमिकाः पाठकैः डॉ० रुद्रदेवत्रिपाठिलिखिता अवश्यमवलोकनीयाः ।

# आगमसामान्यविवेचनम्

आगमतन्त्रशब्दयोर्व्युत्पत्तिं तत्प्रवृत्तिं चालक्ष्य तत्सम्बद्धेषु ग्रन्थेषु प्राचीनेष्वाधुनिकेषु च भूरिशो विचारितम् । वयमेतावदेव वच्मो यदिमौ शब्दौ भारतीयवाङ्मयस्य शाखाविशेषे रूढौ, या हि शाखा प्रथममागमपदेन पश्चाच्च तन्त्रशब्देन परिचीयते स्म । अत्र प्राध्यापको डॉ० विण्टरनित्जो[1] भाषते—"**वस्तुतः संहिताग्रन्था वैष्णवानाम्, आगमग्रन्थाः शैवानाम्, तन्त्रग्रन्थाश्च शाक्तानां पवित्राणि शास्त्राणि**" इति । आगमशब्देन यथा शैववैष्णवागमौ गृह्येते, न तथा संहितापदेन केवलं वैष्णवागमाः । संहिताशब्दोऽयं वेद-पुराण-आयुर्वेद-ज्यौतिषादिविषयसम्बद्धेषु ग्रन्थेष्वपि प्रवर्तत इति वचनमिदमतिव्याप्तिदोषदुष्टं मन्तव्यम् । अपि च, शैवेषु शाक्तेष्वपि ग्रन्थेषु संहितापदस्य, शैवेषु वैष्णवेषु चागमेषु तन्त्रपदस्य प्रवृत्तिरबाधा दृश्यते । अत एवास्वारस्यात् पुनः स[2] वक्ति—"**वस्तुतः शब्दानामेषां विभाजकं निमित्तं नोपलभामहे, तन्त्रशब्दश्च बाहुल्येन सम्पूर्णस्य वाङ्मयस्य बोधकोऽभिमन्यते । न केवलं द्विजातीनाम्, शूद्राणां स्त्रीणां च कल्याणाय प्रवर्तन्ते सर्वाणीमानि शास्त्राणीति समानं वैशिष्ट्यमेतेषाम्**" इति ।

डॉ० चार्ल्स-ईलियटमहोदयेन स्वकीये "**हिन्दुइज्म एण्ड बुद्धिज्म**"[3] इत्याख्ये ग्रन्थे भागवतानां पाशुपतानां च प्रकरणे प्रोक्तम्—"**तन्त्रागमसंहिताग्रन्थेषु पादचतुष्टयेषु ज्ञान-योग-क्रिया चर्याख्याश्चत्वारो विषयाः प्रतिपाद्यन्ते। बौद्धतन्त्रेषु च ज्ञानपदस्य स्थानेऽनुत्तरपदं प्रयुज्यते**" इति। केवलं शैवागमेषु कासुचित् पाञ्चरात्रसंहितासु चायं विभागो दृश्यत इति सत्यम्, अथापि विनैव पादविभागं विषया इमे सम्पूर्णेऽप्यस्मिन् वाङ्मये व्याख्यायन्ते । एवं च आगमतन्त्र-शब्दाभ्यां समानप्रकृतिकस्य विशालतमस्य भारतीयवाङ्मयस्य बोधो भवति ।

डॉ० विण्टरनित्जो[4] यद्यपि डा० ईलियटप्रदत्तां परिभाषामिमां मानयति, तदनुरूपमेव

---

१. "प्राचीन भारतीय साहित्य" इत्यस्य हिन्दीसंस्करणं द्रष्टव्यम् (भा० १, खण्ड २, पृ० २४५) । एतच्च "मोतीलाल बनारसीदास" इत्यनेन १९६६ ई० वर्षे प्रकाशितम् ।

२. तत्रैव २४५ पृष्ठं द्रष्टव्यम्, टिप्पणी च तत्रत्या—"एवमेव वैष्णवानां पाद्मसंहिता पाद्मतन्त्रपदेनापि सम्बोध्यते । भागवते (१/३/८) निर्दिष्टं सात्वतं तन्त्रं सात्वतसंहितैव स्यात् । लक्ष्मीतन्त्रमिति पाञ्चरात्र-संहितैव" इति । इदं चावधेयमत्र । हयशीर्षे पाञ्चरात्रे (आदि० प०३), अग्निपुराणे (अ०३९) च पाञ्चरात्रसंहितास्तन्त्रशब्देनैव संकेतिताः, न संहितापदेन ।

३. "हिन्दुइज्म एण्ड बुद्धिज्म" इत्याख्यो ग्रन्थो द्रष्टव्यः (भा०२, पृ० १८८-१८९) । अत्रत्या टिप्पणी चावलोकनीया ।

४. प्राचीन भारतीय साहित्य, पृ० २४५-२४६

च शैवागमानां पाञ्चरात्रसंहितानां च परिचयमुपस्थापयति, अथापि स[१] वदति—"**तन्त्रशब्दोऽस्मान् शाक्तानां पवित्राणि शास्त्राणि स्मारयति**" इति। एवं वदन् स डॉ० ईलियटस्य वचनमिमं[२] विस्मरति—"**सर्वाणि मतानि तान्त्रिकाणीत्यस्य नायमभिप्रायो यत् सर्वाणि शाक्तानि, किन्तु शाक्तं मतं तान्त्रिकान् सिद्धान्तान् सार्वात्म्येन पालयत्येव**" इति। तदनु डॉ० विण्टरनित्जः[३] शाक्तमतस्य परिचयमुपस्थापयन् निष्कर्षयति—"**पुराणानां तन्त्रशास्त्राणां चाध्ययनं नानन्ददायि, तन्त्राणां कृते तत् सार्वात्म्येन घटते। सर्वाणीमानि व्याकरणनियमाऽनियन्त्रितायामसंस्कृतायां भाषायामुपनिबद्धानि**" इति। ईदृशा आक्षेपा भारतरत्न म० म० पी० वी० काणेमहोदयैः[४] साटोपं प्रत्याख्याताः।

किन्तु डॉ० काणेमहोदयेन[५] तन्त्रशब्दस्य तात्पर्यं वर्णयता यत् प्रोच्यते—"**शक्ति-(काली) पूजायाः, मुद्रा-मन्त्र-मण्डल-पञ्चमकार-दक्षिणवाममार्ग-ऐन्द्रजालिकक्रियाप्रभृतीनां च विधायकमलौकिकसिद्धिप्रदं शास्त्रं तन्त्रपदेनोच्यते**" इति, "**अनेन शास्त्रेण कियतांऽशेन पुराणानि प्रत्यक्षतः पुराणमाध्यमेन वा मध्यकालिक—भारतीया आचारविचारा धार्मिकाः सिद्धान्ताश्च प्राभाव्यन्त**"[६] इति च, तदत्र तेन तन्त्रशब्दास्तस्मिन्नेवार्थे प्रयुज्यते, यो हि डॉ० विण्टरनित्जमहोदयस्याभिप्रेतः। एवं कुर्वन्नपि स [७]जयाख्यसंहिता-अहिर्बुध्न्यसंहिता-प्रपञ्चसार-शारदातिलक-ईशानशिवगुरु-देवपद्धतिसदृशान् शैव वैष्णवागमग्रन्थान् प्रमाणयति, ये हि न सन्ति शाक्ततन्त्रान्तर्गताः।

एवं प्रतीयते यत्[८] सर चार्ल्स-ईलियटप्रदर्शितया पद्धत्याऽस्य शास्त्रस्याध्ययनं नैव सम्पन्नम्। तद्विपरीतं सरजानवुडरफग्रन्था[९] अतिशयं प्रमाणपदवीमनीयन्त। विदुषोऽस्य तान्त्रिकवाङ्मयस्य सेवाकार्यं मानयन्तोऽपि वयं भणामो यदस्य मनीषिणः सम्पूर्णमध्ययनं परवर्तिकाले प्रादुर्भूतं वाङ्मयं क्रोडीकरोति। डा० विण्टरनित्जो[१०] वदति यत् 'तन्त्राणामुद्भवो वंगदेशे सञ्जातः। प्रथममसमप्रान्ते नेपालराज्ये च, तदनु भारताद् बहिर्बौद्धधर्ममाध्यमेन तिब्बत-चीनप्रभृतिदेशेषु तानि प्रावर्तन्त" इति। सत्यमिदं यत् परवर्तिकाले प्रादुर्भूतं वाङ्मयं वंगीयमेव,

---

१. तत्रैव, पृ० २४६

२. हिन्दुइज्म०, भा०२, पृ० १९१

३. प्राचीन भारतीय०, पृ० २६२

४. "हिस्ट्री आफ धर्मशास्त्र" (धर्मशास्त्र का इतिहास) इत्यस्य हिन्दीसंरकरणम् (भा०५, अ०२६, पृ०४६), उत्तरप्रदेशप्रशासनहिन्दीसमितिद्वारा प्रकाशितम्, लखनऊ, सन् १९७३

५. तत्रैव, पृ० १

६. तत्रैव, पृ० १

७. तत्रैव, पृ० ५५-५८, ७८-८३

८. हिन्दुइज्म० इत्यस्य "भागवताज् एण्ड पाशुपताज्" इति शीर्षकेऽध्याये, भा०२, पृ० १८७

९. प्राचीन भारतीय०, पृ० २४९

१०. तत्रैव, पृ० २५०

किन्तु असम-नेपाल-तिब्बतादिषु प्रसृतं वाङ्मयं तन्नास्ति। तद्धि ज्ञानमभिनवगुप्ततः पूर्वं भारतस्य विभिन्नेषु क्षेत्रेषु प्रादर्भूतमासीत्। परवर्तिकाले प्रादर्भूतं च सम्पूर्णं वाङ्मयं मोहम्मदीयाक्रमणानन्तरं विनष्टस्य वाङ्मयस्य पुनरुद्धृतिरूपं मन्तव्यम्। नेपालतिब्बतादिषु सुरक्षितस्य वाङ्मयस्य साहाय्येन वंगप्रदेशे कार्यमिदं सम्पन्नम्। अत एव केचन विचारका[1] भारतीये तान्त्रिके वाङ्मये वैदेशिकं प्रभावमङ्गीकुर्वन्ति तदनुपदमेव समालोचयिष्यते।

आगमेषु हि तादृशी पूजापद्धतिराविर्भूता, यया आराधक आराध्येन सह आन्तरया वरिवस्यया तादात्म्यं स्थापयन् भूतिशुद्धिप्राणप्रतिष्ठा-न्यास-मुद्रादिमुखेन स्वयं देवो भूत्वा देवं यजते। स्वयं देवस्वरूपः सन् स स्वेष्टदेवतामनयैव पद्धत्या मूर्ति-पट-यन्त्र-मण्डलादिषु प्रतिष्ठापयति; तस्य बाह्यवरिवस्यां च सम्पादयति। बाह्यवरिवस्यापूर्णतायै व्रतोपवासोत्सवपर्वादीनां वर्ततेऽत्र विधानम्, आन्तरवरिवस्या च कुण्डलिनीप्रबोधमुखेन योगेन सम्पाद्यते। वैदिककर्मकाण्डतो विलक्षणस्यास्य कर्मकाण्डस्य निष्पत्तये किल यस्य शास्त्रस्य प्रादुर्भावः सञ्जातः, तदेवागमशास्त्रमिति वा तन्त्रशास्त्रमिति वा नाम्ना प्रथते। इष्टदेवताया आन्तरवरिवस्यायै स्वीयां विलक्षणां दार्शनिकीं दृष्टिं योगपद्धतिं चैतद् बिभर्ति, बाह्यवरिवस्यायै चात्र मन्दिराणां मूर्तीनां निर्माणस्य तदाराधनस्य च विशिष्टा विधयो वर्णिताः। तदाधृता एव विद्या (ज्ञान)-योग-क्रिया-चर्याख्याः पादाश्चत्वार आगमेषु दृश्यन्ते। शिव-विष्णु-शक्ति-सूर्य-गणेशस्कन्दप्रभृतीनां देवानामाराधनमनयैव पद्धत्या भवति स्म। शैववैष्णवागमानां शाक्ततन्त्राणां चाराधनविधिषु नैव किञ्चिदन्तरं विद्यते। भारतीये वाङ्मये[2] कुत्रचित् श्रुतिसमकक्षमन्यत्र च पुराणधर्मशास्त्रसदृशं प्रामाण्यमेतेषामङ्गीक्रियते।

अत्र[3] डॉ० ईलियटमहोदयस्योक्तिरियमवश्यं तथ्यपूर्णा यत् तन्त्रशास्त्राणि मानवमात्रस्य कल्याणाय प्रवर्तन्ते। अत्रत्यं विधिविधानं दीक्षाप्राप्त्यनन्तरं गुरुमात्रगम्यम्। संस्कारयुक्तानां मन्त्राणां मातृकाणां च रहस्यं गुरुरेव विज्ञापयति। नात्र साधको भगवत्सन्निधौ गन्तुं कामयते किन्तु स स्वेष्टदेवतामेव स्वसन्निधावाह्वयते। अपरं चेदं वैशिष्ट्यमस्य शास्त्रस्य यदत्र साधकः स्वात्मानं मन्त्रदेवतारूपेण परिणमयति, स विश्वातीतः सन्नपि जागतिकं व्यवहारं सम्पादयति। मानवशरीरं व्यापकानां स्पन्दात्मकानां शक्तीनां प्रतिरूपमिव काशते। शक्तीनां स्पन्दनमिदं विश्वत्र समानरूपेणाव्याहतं प्रसरति।

आगमतन्त्रपदाभिलप्ये सम्पूर्णेऽपि वाङ्मये तदेतद्वैशिष्ट्यद्वयं राजते। आगमपदाभिलप्यस्य वाङ्मयस्य प्राक् तन्त्रपदाभिलप्यस्य च पश्चादाविर्भावः संजात इत्येवानयोर्भेदकं तत्वमित्यामनन्ति

---

१. म०म० भारतरत्न पी० वी० काणेमहोदयैः स्वकीये ग्रन्थे पूर्वोक्ते खण्डे (पृ० २-३, मूले टिप्पण्यां च) मतानीदृशानि समुपस्थापितानि खण्डितानि च।

२. प्रो० चिन्ताहरणचक्रवर्तिना "दि तन्त्राज् : स्टडीज ऑन देयर रिलीजन एण्ड लिटरेचर" इत्याख्य. ग्रन्थस्य कलिकातातः १९६३ ई० वर्षे प्रकाशितस्य "प्लेस आफ दि तन्त्राज अमोंग अदर शास्त्राज् इत्याख्येऽध्याये (पृ० २९-३७) भागवत-वायु-संहिता-मनुस्मृतिव्याख्याकार—कुल्लूकभट्ट-भास्करराय-मित्रमिश्र-मधुसूदन-सरस्वतीप्रभृतीनां प्रामाण्येन विषय एव प्रस्थापितः।

३. हिन्दुइज्म० भा० २, पृ० १९०

विमर्शका इतिहासज्ञाः। आश्चर्यमिदं यद् डॉ० ईलियटसदृशैर्विद्वद्भिराविष्कृतायामप्यनयोर-नुस्यूततायां नावहितं भारतीयविद्यानुशीलनतत्परैर्मनीषिभिः। अत एव तन्त्रशास्त्रानुशीलनप्रसङ्गे ह्यागमशास्त्रं सर्वथोपेक्षितम्, अथ चासम्मतकल्पनानामैन्द्रजालिकेनावरणेनाच्छादितं तच्छास्त्रम्। वस्तुतो न केवलं तन्त्रशास्त्रेण मध्यकालीना भारतीया आचारविचारा धार्मिकाः सिद्धान्ताश्च प्रभाविता अभूवन्, प्रत्युत ततोऽपि पूर्वमागमशास्त्रेण बुद्धोत्तरकालीना भारतीया चिन्तनपद्धतिः प्रत्यक्षतया प्रभाविताऽभवत्।

**"गच्छ त्वं भारते वर्षे अधिकाराय सर्वतः। पीठोपपीठक्षेत्रेषु कुरु सृष्टिमनेकधा॥"**[1] इत्यस्य श्लोकस्य प्रामाण्येन केचन विद्वांसो वैदेशिकं प्रभावमत्र सूचयन्ति। पीठोपपीठाद-यस्तान्त्रिका इमे शब्दा एव तत्सिद्धान्तखण्डनायालम्। एते हि शब्दा भारते वर्षे पूर्वत एव तान्त्रिकसिद्धान्तानां प्रसारं सूचयन्ति।

डॉ० प्रबोधचन्द्रबागचीमहोदयो[2] विभागद्वयमत्र सम्पादयति—आगमयामलादीन्यास्तिक-तन्त्राणि, कुलाचार-वामाचार-सहजयान-वज्रयानादीनि च नास्तिकतन्त्राणीति। अनयोर्नास्तिक-तन्त्रेषु स वैदेशिकं प्रभावमङ्गीकरोति। सम्मोहनतन्त्रं शक्तिसंगमतन्त्रादभिन्नम्, नहि तत् कम्बुजशिलालेखस्मृतं सम्मोहतन्त्रमित्यस्माभिरन्यत्र[3] साधितम्। अभिनवगुप्तपूर्ववर्तिनां परवर्तिनां च तन्त्रग्रन्थानां स्वरूपं नितान्तं भिद्यते। तन्त्राणां प्राचीनार्वाचीनत्वविभागोऽस्माभिः शक्तिसंगमतन्त्रस्य उपोद्घाते (पृ० २०-२१) प्रदर्शितः। एवं च परवर्तिग्रन्थसाहाय्येन पूर्ववर्तिनां तन्त्राणां स्वरूपं नैव निर्धारयितुं शक्यते। तादृशा आक्षेपाः परवर्तिनि काले प्रादुर्भूते तान्त्रिके वाङ्मय एव प्रसरेयुः।

---

१. म०म० हरप्रसादशास्त्रिसंदृब्धे नेपालदरबारपुस्तकालयतालपत्रीयपाण्डुलिपिसूचीपत्रे कलिकाताताः १९०५ ई० वर्षे प्रकाशिते प्रथमभागस्य भूमिका (पृ० ८९) द्रष्टव्या।

२. "स्टडीज इन दि तन्त्राज्" इत्याख्यस्य डॉ० प्रबोधचन्द्रबागचीसंदृब्धस्य ग्रन्थस्य "आन फोरेन एलिमेण्ट इन दि तन्त्राज्" इत्याख्यं प्रकरणं द्रष्टव्यम् (पृ० ४५-५५)।

३. डॉ० प्रबोधचन्द्रबागचीमहोदयेन पूर्वोक्ते ग्रन्थे (पृ० १-२) कम्बुजशिलालेखस्मृतानां प्राचीनानां चतुर्णां तन्त्रग्रन्थानां परिचयः प्रदत्तः। तत्र स्मृतं सम्मोहनतन्त्रं ते विष्णुक्रान्ताविभागे स्मृतात् सम्मोहनतन्त्राद-भिन्नंमन्वते, तद्ग्रन्थमातृकाधारेण च स्वकीयं निष्कर्षं प्रस्तुवन्ति। अत्र स्मरणीयमेतद् यत् तन्त्राणां सरजानवुडरफप्रतिपादितोऽश्वक्रान्ता-रथक्रान्ता-विष्णुक्रान्ताविभागः परवर्तिनस्तन्त्रग्रन्थान् क्रोडीकरोति। कम्बुजशिलालेखे स्मृतानां शिरश्छेद-वीणाशिख-संमोहतन्त्राणां यथार्थः परिचयो नागरीप्रचारिणीसभातः प्रकाशितस्य विश्वकोशस्य पञ्चमे खण्डे तन्त्रसाहित्य-शब्दविवरणे, नयोत्तरस्य च नित्याषोडशिकार्ण-वोपोद्घाते (पृ० २८) द्रष्टव्यः। वीणाशिख इति तत्तन्त्रस्य नाम, न तु विनाशिख इति चावधेयमत्र। नेपालराजधानीकाष्ठमण्डपनगरतः २०२३ वैक्रमे वत्सरे प्रकाशिते वैरोचनीये प्रतिष्ठालक्षणसारसमुच्चयेऽपि नयोत्तरं वामतन्त्रेषु पठ्यते। ग्रन्थ एष विक्रमनवमभवेन वैरोचनशिवाचार्येण रचितः। एवं च कम्बुजशिलालेखे स्मृतास्त्रयो ग्रन्था दक्षिणस्रोतोविनिर्गताः, नयोत्तरं च वामस्रोतोविनिःसृतमिति तेन ज्ञायते। डॉ० बागचीप्रतिपादितेन विवरणेनास्य न मनागपि सम्बन्धः। विशेषजिज्ञासुभिस्तन्त्रयात्रायां संगृहीतोऽस्मदीयः "सम्मोहनतन्त्रं शक्तिसंगमतन्त्रादभिन्नम्" इति शीर्षको निबन्धो द्रष्टव्यः (पृ० १०६-१११)।

शाक्ततन्त्राणां बौद्धहिन्दूविभागं परिकल्प्य डॉ० विनयतोषभट्टाचार्यमहोदयो[१] हिन्दूतन्त्रेषु बौद्धतन्त्राणां प्रभावं साधयति। स बौद्धे महायानधर्मे पौराणिकं प्रभावं पश्यति।[२] वस्तुतो नैष पौराणिकः प्रभावः, किन्त्वागमिक इत्यनुपदमेव चर्चयिष्यते।

पङ्क्तीनामासां लेखकः स्पष्टमुद्घोषयति यद् भारतीयस्य तत्त्वज्ञानस्य ब्राह्मण-बौद्ध-जैन-हिन्दूनाम्ना कल्पितेषु कालविभागेषु कृतमनुशीलनमसीदिति। सम्पूर्णस्य भारतीयतत्त्वज्ञानस्य दैशिकं कालिकं च क्रमिकं विकासं सम्परीक्ष्य तौलनिकं घातप्रतिघातात्मकं चानुशीलनं विधेयम्। पावनेऽस्मिन् कर्मणि च ब्राह्मण-बौद्ध-जैनसदृशाः कल्पिता विभागाः सत्यान्वेषणे बाधका न स्युः। एतादृशस्यानुशीलनस्याभावादेवानेका भ्रान्तयः प्रसृता दृश्यन्ते।

पाञ्चरात्रपाशुपतमतयोः प्राचीनता नैकैर्विद्वद्भिः साधिता। [३]डॉ० हेमचन्द्ररायचौधुरी-महोदयश्छान्दोग्योपनिषदि पाञ्चरात्रप्रभावं पश्यति। शुक्लयजुर्वेदीये शतरुद्रियाध्याये कृष्ण-यजुर्वेदीयसंहितासु च पाशुपतं मतं स्पष्टमभिलक्ष्यते।[४] महाभारते वेद-सांख्य-योग-पाशुपत-पाञ्चरात्रशास्त्राणां समानं प्रामाण्यमभिप्रेयते।" **बहुधा ह्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः। त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे॥**"[५] इति कालिदासः, "**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने···नृणामेको गम्यस्त्वमसि पयसामर्णव इव**"[६] इति पुष्पदन्तः, **ननु सांख्ययोगपाञ्चरात्रपाशुपताद्यागमाः किं धर्मे प्रमाणमुत न**"[७] इति च वीरमित्रोदयकारः शास्त्राणामेतेषां प्रामाण्यं साधयति। वैदिकपौराणिकवाङ्मययोः परिदृश्यमानं महदन्तरं किं निमित्तकमिति प्रवर्तते प्रश्नः। "**प्लवा ह्येते अदृढा यज्ञरूपाः**"[८] इति न केवलमुपनिषद्भिरुद्घोषितम्, किन्तु तदैव सांख्य-योग-पाञ्चरात्रपाशुपतसिद्धान्ता अपि प्रसिद्धिं लेभिरे। भगवता बुद्धेन महावीरेण च यदा वैदिको धर्मः समालोचितस्तदा प्रबुद्धैर्भारतीयैश्चिन्तकैर्नूतना दृगुन्मीलिता आगमपदाभिलप्या, यस्याः पूर्णः प्रतिबिम्बो महाभारते पुराणेषु च द्रष्टुं शक्यते। एतेषु हि न

---

१. "एन इण्ट्रोडक्शन टु बुद्धिष्ट इसोटेरिज्म" इत्याख्यस्य ग्रन्थस्य "चौखम्बा संस्कृत सिरीज, वाराणसी" इत्यतः १९६४ ई० वर्षे प्रकाशितस्य "इन्फ्लुएंस आफ बुद्धिष्ट तान्त्रिसिज्म ऑन हिन्दुइज्म" इति शीर्षकं प्रकरणं द्रष्टव्यम् (पृ० १४७-१६४)। डॉ० पी० वी० काणेमहोदयेन मतमेतद्विस्तरेण समालोचितमिति तद् धर्मशास्त्र० भा० ५, पृ० ७-८ इत्यत्र द्रष्टव्यम्।

२. तत्रैव, पृ० ५०

३. "अर्ली हिस्ट्री आफ दि वैष्णव सेक्ट" इत्याख्यः कलिकाताविश्वविद्यालयतः १९२० ई० वर्षे प्रकाशितो ग्रन्थो द्रष्टव्यः (पृ० ३९-५४)।

४. शान्तिपर्वणि नारायणीयोपाख्याने (३४९/६८) गीताप्रेसगोरखपुरसंस्करणे।

५. रघुवंशे (१०/२६) निर्णयसागरबम्बईसंस्करणे, सन् १९३२

६. शिवमहिम्नः स्तोत्रे ७ श्लोके।

७. वीरमित्रोदये परिभाषाप्रकरणे (पृ० २०) वाराणसीसंस्करणे, सन् १९०६

८. मुण्डकोपनिषदि (१/२/७) द्रष्टव्यम्।

केवलं कृतान्तपञ्चकस्य, बुद्धमहावीरयोरुपदेशसारोऽपि संगृहीतो वर्तते। अत्र हि वैदिकयज्ञीय-कर्मकाण्डतो विलक्षणस्य भक्तिप्रधानस्य पौराणिकधर्मस्य साक्षात्कारो भवति, स्त्रीणां शूद्राणां च समानोऽधिकारः स्वीकृतः। नवीनस्य पौराणिकधर्मस्यैव न, भक्तिप्रधानस्य बौद्धमहायान-धर्मस्यापि प्रादुर्भावस्तत एव संजातः। पौराणिकः किल धर्मो बौद्धमहायानधर्मस्य सहोदरो न तु जनकः।

सांख्ययोगयोः पाञ्चरात्रपाशुपतमतयोश्च प्राचीनं वाङ्मयं साम्प्रतं नोपलभ्यते, किन्तु तस्य सत्ताऽवश्यमङ्गीकर्तव्या।[1] छान्दोग्योपनिषदि एकायनशब्दः श्रूयते। शब्द एष पाञ्चरात्र-श्रुतिं निर्दिशति। श्वेताश्वतरोपनिषदि पाशुपतसिद्धान्ता व्याकृता इव लक्ष्यन्ते। एवं च कृतान्तपञ्चकेन न केवलं वैदिके, बौद्धेऽपि धर्मे परिवर्तनमकारि, येन हि पौराणिकस्य बौद्धमहायान-धर्मस्य च प्रादुर्भावः समजायत। आगमिकस्य महायानधर्मस्य च तौलनिकमशीलनमपेक्षितम्। यद्यपि प्राचीनमागमिकं साहित्यं स्वल्पमात्रयैव समुपलभ्यते, तथापि पुराणेषु तस्य पर्याप्ता अंशाः सुरक्षिताः सन्ति। अग्निपुराणीयाः केचनाध्यायाः (३९-७०) हयशीर्षपाञ्चरात्रस्य[2] आदिकाण्डेन, अन्ये (७१-१०६) च सोमशम्भुकृतकर्मकाण्डक्रमावलीप्रमाणतो[3] लीलावतीशिवागमेन सदृशाः सन्ति। पुराणेषु परवर्तिकाले प्रादुर्भूतानां शाक्ततन्त्राणां प्रभावः स्वीक्रियते[4], किन्तु वैष्णवानां शैवानां चागमानां प्रभावो नावधारितोऽद्यावधि।

डॉ० ईलियटमहोदयो[5] रामायणमहाभारतम्, पुराणानि, आगमतन्त्राणि, सन्तसाहित्यं चेत्येवं भारतीयसाहित्यविकासक्रममङ्गीकरोति। अत्र तन्त्रागमसाहित्यं तृतीये स्थाने संनिवेश्यते। किन्तु तस्य प्रथमं स्थानं परिकल्पनीयम्। कृतान्तपञ्चकाश्रित इतिहासपुराणसाहित्यविकास इत्यनुपदमेवोक्तम्। आगमतन्त्रापेक्षया पुराणवाङ्मयस्य वैशिष्ट्यमिदं यदत्र वेदानां सर्वातिशायि प्रामाण्यमङ्गीक्रियते वर्णाश्रमव्यवस्था च यथावद् रक्ष्यते। परस्परविरुद्धदृष्टीनां समन्वयापादनं

---

१. "ऋग्वेदं भगवोऽध्येमि···वाकोवाक्यमेकायनम्" (७/१/२) इत्यत्र।

२. हयशीर्षपाञ्चरात्रस्य आदिकाण्डस्य १/१४ पटलात्मकः प्रथमो भागः १९५२ ई० वर्षे, १५-४४ पटलात्मको द्वितीयो भागश्च १९५६ ई० वर्षे "वारेन्द्र रिसर्च सोसाइटी" इति संस्थया साम्प्रतं वंगदेशीयराजशाही-नगरस्थितया प्रकाशितौ। अग्निपुराणस्य ३९-७० अध्यायानां प्रवक्ता हयग्रीवो भगवान्। एतच्च—"हयशीर्षः प्रतिष्ठार्थं देवाना ब्रह्मणेऽब्रवीत्" (३८/५१) इति तत्रत्यवचनतो ज्ञायते। अत्रत्ये ३९ अध्यायारम्भे पठितानि २५ पाञ्चरात्रसंहितानामानि हयशीर्षतन्त्रानुसारीण्येव। अत्र हयशीर्षे वर्णिता भागवतसंहिताः सामान्यसंहिताश्च न परिगणिताः।

३. काश्मीरग्रन्थावल्यां १९४७ ई० वर्षे प्रकाशितायां कर्मकाण्डक्रमावल्याम् (पृ० ३१-१८६) अग्निपुराणस्य ७१-१०६ अध्यायास्तथैव दृश्यन्ते। "स्कन्धायेशो यथा प्राह प्रतिष्ठार्थं तथा शृणु" (७०/९) इत्युक्तिपुरस्सरं चैतत् प्रकरणं प्रारभ्यते। कर्मकाण्डक्रमावली ११३० वैक्रमे वत्सरे रचिता। अत्र च "अथ संक्षेपतो दृष्टं लीलावत्यां शिवागमे" (पृ० ३१) इत्येवं लीलावतीशिवागमः स्मर्यते प्रकरणारम्भे। एवं च तदागममा-श्रित्य कर्मकाण्डक्रमावल्यामग्निपुराणे चैतत्सर्वं प्रतिपादितमिति वक्तुं शक्यते।

४. धर्मशास्त्र०, भा० ५, अ० २६, पृ० १, ४८-४९ इत्यत्र द्रष्टव्यम्।

५. हिन्दुइज्म०, भा० २, पृ० १८६-१९१ इत्यत्र।

द्वितीयमस्य वैशिष्ट्यम् । अनेनेतिहासपुराणवाङ्मयस्य परवर्तिता स्पष्टं सिद्धयति । सन्तसाहित्यं स्पष्टमागमतन्त्रधारया प्रभावितं सदपि पौराणिकीं समन्वयदृष्टिं न जहाति ।

अत्र स्वाभाविकोऽयं प्रश्नः समुदेति यन्महत्त्वपूर्णमिदं प्राचीनं वाङ्मयं साम्प्रतं कथं नोपलभ्यते ? पातञ्जलमहाभाष्य-शाबरभाष्य-युक्तिदीपिकासदृशेषु प्राचीनेषु ग्रन्थेषूद्धृतं विशालं भारतीयं साहित्यमद्य नामशेषं वर्तते, यस्य हि प्रादुर्भावो वैक्रमादारम्भपूर्वोत्तरशताब्दीषु समजायत । किमत्र कारणम् ? ऐतिहासिका एव प्रश्नमेनं सम्यगुत्तरयेयुः ।

बादरायणेन[१] ब्रह्मसूत्रीये तर्कपादे सांख्ययोग-वैशेषिकदर्शनानि, बौद्धजैनदर्शने, पाञ्चरात्रपाशुपतमते[२] चेति सर्वाणीमान्यवैदिकानीति कृत्वा खण्डितानि । बौद्धजैनमताभ्यामपि पाञ्चरात्रपाशुपतमतयोः प्रतियोगिता सम्भाव्यते । अस्यामुभयतः पाशारज्जुसदृश्यां दुःस्थितौ, इतिहासपुराणयोः संग्राहिकायां प्रवृत्तौ च जागरूकायां पाञ्चरात्रपाशुपतमतयोः प्राचीनं वाङ्मयं लुप्तमिति वयमुत्पश्यामः ।

अस्यां स्थितौ पाञ्चरात्रपाशुपतमताभ्यां बौद्धमहायानधर्मे जैनपौराणिकधर्मयोः, न्यायवैशेषिकदर्शनयोश्च कियान् परिष्कारः कृत इत्यस्य विश्लेषणं दुःशकमिव प्रतीयते । किन्तु यावानंशोऽस्यावशिष्टस्तेनापि कथञ्चित् कार्यमेतत् सम्पादयितुं शक्यते । खेदावहमेतत् यद् विशालमेतदागमवाङ्मयमप्रकाशितमुपेक्षितं च विद्यतेऽद्यापि । कुमारिलभट्टपादेन भगवता शङ्कराचार्येण च प्रत्याख्याता अपि पाञ्चरात्रपाशुपतसिद्धान्ता धर्मशास्त्रनिबन्धकारैर्निश्चितेंऽशे[३] प्रमाणत्वेनाङ्गीकृताः । आश्चर्यमेतद् येषामागमतन्त्रग्रन्थानां साहाय्येन पुराणस्मृतिसाहित्ययोर्धर्मशास्त्रीयनिबन्धानां स्थापत्यमूर्तिचित्रकलानां संगीतकामशास्त्रयोश्चाद्भुतो विकासः समजायत, ते नितान्तमुपेक्षिता अभूवन् । शैववैष्णवागमयोः क्रियतांऽशेन संरक्षणं दक्षिणभारते सम्पन्नम् । तदधुना तदेतस्य विशालस्य वाङ्मयस्य परिचयाय प्रयत्यते ।

---

१. वेदान्तसूत्राणां द्वितीयाध्यायस्य द्वितीयः पादस्तर्कपादनाम्ना प्रख्यायते ।

२. वेदान्तसूत्रीयं पाञ्चरात्राधिकरणं विभिन्नैराचार्यैर्विभिन्नया पद्धत्या व्याख्यायते। शङ्कराचार्यभगवत्पादा अत्र पाञ्चरात्रागमानामांशिकं प्रामाण्यमूरीकुर्वन्ति । रामानुजाचार्यास्तेषां सार्वात्म्येन प्रामाण्यं साधयन्ति । मध्वाचार्य-निम्बार्काचार्यबलदेवविद्याभूषणा अधिकरणेऽस्मिन् शाक्तं मतं समालोच्यत इति ब्रुवते । एतदर्थमस्मदीयः "पाञ्चरात्राधिकरण" इति शीर्षको हिन्दीनिबन्धो द्रष्टव्यः ।

३. अपरार्ककृतयाज्ञवल्क्यस्मृतिटीकायां १९०३ ई० वर्षे पुण्यपत्तनस्थ-आनन्दाश्रमसंस्कृतग्रन्थमालायां प्रकाशितायां (भा० १, पृ० १०-१९) द्रष्टव्यमेतत् ।

# वैष्णवागममीमांसा

रघुनाथौ नमस्कृत्य गोपीनाथौ च मे गुरू ।
नर्मदां मातरं नत्वा वैष्णवागममाश्रये ।।

इदमत्रावधेयम्—"**इह तावत् समस्तोऽयं व्यवहारः पुरातनः । प्रसिद्धिमनुसन्धाय सैव आगम उच्यते ।।**" (३५/१-२) इति तन्त्रालोकादिशा लोके प्रवृत्तानां व्यवहाराणां प्रसिद्धीनां च समाहार आगमशास्त्रमिति । तदत्र प्रथमं वैष्णवागममीमांसा प्रस्तूयते ।

## वैष्णवागमस्य त्रैविध्यम्

वैष्णवागमा विशेषेण विभागत्रयवन्तो वर्तन्ते । वैखानसाः, भागवताः पाञ्चरात्राश्चेति । वैखानसः सम्प्रदायः साम्प्रतमान्ध्रप्रदेशे प्रचलति । तिरुपतिं निकषा श्रीशैलवसतेर्भगवतो वेङ्कटनाथस्य समाराधनं वैखानसागमपद्धत्या भवति । पाञ्चरात्रः सम्प्रदायस्तमिलनाडुप्रदेशे प्राधान्येन प्रवर्तते । श्रीरङ्गवसतेर्भगवतो रङ्गनायकस्योपासा पाञ्चरात्रपद्धत्या सम्पाद्यते । बाणभट्टस्य महाकवेर्हर्षचरिते गद्यकाव्ये भागवताः[1] पाञ्चरात्राश्च पृथक्तया वर्णिताः । "**पाञ्चरात्रं भागवतं तथा वैखानसाभिधम्**" इति वचनमुद्धरन्[2] भास्कररायोऽपि भागवतमतस्य पार्थक्यं सूचयति । उत्तरे भारते विष्णुपुराणश्रीमद्भागवतपुराणादिप्रतिपादितो भागवतः सम्प्रदायोऽयं प्रवर्तत इति वक्तुं शक्यते । शक्तिसंगमतन्त्रे तु दशविधा वैष्णवा वर्णिताः । तद्यथा—

**"वैखानसो भवेदादौ श्रीराधावल्लभस्तथा ।
गोकुलेशो महेशानि ! तथा वृन्दावनी भवेत् ।।
पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः ।
रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि ।।
ततो भागवतो देवि दशभेदाः प्रकीर्तिताः ।।"**

(१/८/३८-४०) इति ।

---

१. निर्णयसागरप्रेसमुद्रिते पञ्चमे संस्करणे २३६-२३७ पृष्ठयोरेतदवलोकनीयम् ।

२. नित्याषोडशिकार्णवसेतुबन्धे पुण्यपत्तनस्थ-आनन्दाश्रमग्रन्थावलीमुद्रिते प्रथमे संस्करणे पृ० ३ द्रष्टव्यम् ।

अत्र राधावल्लभगोकुलेश-वृन्दावनी-वीरवैष्णव-रामानन्दी-हरिव्यासी-निम्बार्काख्याः सम्प्रदायाः स्पष्टं परवर्तिभिराचार्यैः प्रवर्तिता इति वैखानस-भागवत-पाञ्चरात्राख्यं सम्प्रदायत्रयमेव प्राचीनं मन्तव्यम्। तदत्र वैखानसभागवतसम्प्रदाययोः संक्षेपेण पाञ्चरात्रस्य च विस्तरेण परिचय उपस्थाप्यते।

## वैखानसागमपरिचयः

वैखानसश्रौतसूत्रादयः, केचन संहिताग्रन्थाश्च वैखानसागमस्य प्रकाशिता उपलभ्यन्ते। प्राधान्येन तिरुपतिनगरतस्तेषां प्रकाशनं सञ्जातम्। विभिन्नासु संहितासु षष्टिपरिमितानां संहिताग्रन्थानां नामावली दृश्यते। एतेषु सप्तदशग्रन्थाः समुपलभ्यन्ते। तत्राष्टौ मुद्रिताः। अमुद्रितावपि द्वौ सम्पूर्णौ। अन्ये च सप्त ग्रन्था आंशिकरूपेणावशिष्टाः सन्ति। अत्र वैदिकं वाङमयं प्रति भूयानादरः। विष्णु-पुरुष-सत्य-अच्युत-अनिरुद्धाख्यपञ्चव्यूहरूपेण च भगवानर्च्यते। तत्र विष्णुरादिमूर्तिपदेन, पुरुषादयश्च चतुर्मूर्तिपदेनाभिधीयन्ते। पञ्चमूर्तय एताः पञ्चवीरपदेनाप्युच्यन्ते। वैखानसाः पद्मकोशप्रतीकाशे महति विश्वस्यायतने हृदये विज्वलद्वैश्वानरशिखामध्यस्थं परमात्मानं नारायणापराभिधं श्रीविष्णुमेवाक्षरं ब्रह्मेति विदुः। तदेतद् ब्रह्म निष्कलेन सकलेन च स्वरूपेण राजते। श्रीश्च भवति तस्य शक्तिः। सा च नित्या आद्यन्तरहिताऽव्यक्तरूपिणी विष्णोः संकल्पाच्च प्रवर्तते।

## भागवतागमपरिचयः

हयशीर्षपञ्चरात्रे आदिकाण्डे (२/२-९) पञ्चविंशतिपाञ्चरात्रागमानां दशभागवतागमाना च नामावली वर्तते। डॉ० ओटोश्रादरमहोदयेन अहिर्बुध्यसंहिताभूमिकायां (पृ०५-११) सर्वे इमे पाञ्चरात्रसंहितासु परिगणिताः। अग्निपुराणे (३९/२-५) अत्रत्यानामेव पञ्चविंशतिपाञ्चरात्रागमानां नामावली वर्तते। यदि शिष्टा अपि संहिताः पाञ्चरात्रीया एव स्युस्तर्हि तासामपि नामावली तत्र संगृहीता भवेत्? अग्निपुराणे तासामसंग्रहात्, **"अमी भागवतानां च"** (२/९) इति तत्र स्पष्टं निर्देशाच्च भागवतसम्प्रदायस्येमाः संहिता इति निश्चप्रचम्। अत्र तन्त्रभागवतं परिगण्यते। मध्वाचार्येण[1] तन्त्रमेतत् प्रमाणत्वेनोद्ध्रियते। विष्णुपुराणम्, श्रीमद्भागवतमित्यादीनि पुराणानि भागवतसम्प्रदायस्यैव प्रातिनिध्यमाचरन्तीत्यामनन्ति मनीषिणः। नारदभक्तिसूत्रादयः, भगवद्भक्तिरसायन-भक्तिचन्द्रिका-हरिभक्तिरसायनसिन्धु-विष्णुभक्तिकल्पलताप्रभृतयो भक्तिशास्त्रग्रन्थाश्च भागवतसम्प्रदायमेवोद्वलयन्ति। रूपगोस्वामि-जीवगोस्वामिप्रभृतीनां वंगीयानां विदुषामुज्ज्वलनीलमणि-षट्सन्दर्भप्रभृतयो ग्रन्था विष्णुभक्तेर्गरीयस्त्वं रसरूपत्वं पञ्चमपुरुषार्थत्वं च साधयन्ति। विष्णुपुराण-भागवत-भक्तिशास्त्रादिभिः प्रतिपादितैः सिद्धान्तैः परिचिता एव सन्ति भवन्तः। न चोपलभ्यन्ते भागवततन्त्रप्रभृतीनि स्वतन्त्राणि तन्त्राण्यस्य सम्प्रदायस्य। तेषामभावे च शास्त्राणामेषां तौलनिकमध्ययनं न कर्तुं शक्यत इति शास्त्राणामेषामन्वेषणे प्रथमं प्रयत्नो विधेयः।

---

१. भागवततात्पर्यनिर्णये, पृ० २-३ द्रष्टव्ये।

## पाञ्चरात्रागमपरिचयः

छान्दोग्योपनिषदि (७/१/२) श्रुता एकायनविद्या। पाञ्चरात्रश्रुतिः शब्देनानेन बोध्यत इति निर्विवादं स्वीक्रियते। एकायनश्रुतिमधीयाना औपगायन-कौशिक-शाण्डिल्य-भरद्वाज-मौञ्जायनाख्याः पञ्च आचार्या शास्त्रमेनं प्रवर्तयामासुः[1]। काण्वशाखामहिमसंग्रहकारेण नागेशेन[2] पाण्डुरङ्गपुरवास्तव्येन "शुक्लयजुर्वेदीया काण्वशाखैवेयमिति प्रतिपाद्यते।" काण्वीं शाखामधीयानावौपगायनकौशिकौ। प्रपत्तिशास्त्रनिष्णातौ" (१/१०६) इति वदन्ती जयाख्य-संहिता तमिमं विषयं पोषयति।[3] डॉ० हेमचन्द्ररायचौधुरी डॉ० आर० जी० भाण्डारकर-प्रभृतिभिश्छान्दोग्योपनिषत्-पाणिनिसूत्र-पातञ्जलमहाभाष्य-शिलाशासनादिप्रामाण्येनास्य च। शास्त्रस्य प्राचीनत्वं साधितम्। वेदान्तसूत्रे तर्कपादे पाञ्चरात्रमतं खण्डयते। भगवद्गीता-पाञ्चरात्रसम्मतं प्रपत्तिसिद्धान्तं मानयति। नारायणीयोपाख्याने महाभारतीये च वर्ण्यते पाञ्चरात्रमतमहिमा। उत्पलवैष्णवकृतायां स्पन्दप्रदीपिकायां पाञ्चरात्रश्रुतिः, पाञ्चरात्रोप-निषत्, कालपरा-चिच्छक्तिसंस्तुति-जयाख्यसंहिता-जाबालिसूत्र-ज्ञानसम्बोध-धातुसमीक्षा-नारद-संग्रह-बौधायनसंहिता-मायावामनसंहिता-मायावैभवागम-लक्ष्मीसंहिता-विश्वसंहिता-विष्णुयामल-वैहायसीसंहिता-षड्धातुसमीक्षा-षाड्गुण्यविवेक-सङ्कर्षणसूत्र-सात्वतसंहितासदृशाश्चागमग्रन्था-उद्धृता विद्यन्ते। सर्वैरेतैः प्रमाणैः पाञ्चरात्रशास्त्रस्य प्राचीनत्वं सुतरां सिद्ध्यति।

## पाञ्चरात्रपदप्रवृत्तिनिमित्तम्

पाञ्चरात्रपदप्रवृत्तिनिमित्तविषये तेषु तेषु ग्रन्थेषु प्राचीनेष्ववर्वाचीननेषु च विविधा व्युत्पत्तयो वर्णिता विद्यन्ते। अभिगमनम्, उपादानम्, इज्या, स्वाध्यायः, योग इति पञ्चानां भगवत्कैङ्कर्यरूपाणां कर्मणां प्रत्यहमनुष्ठानार्थं प्रतिनियताः पञ्च कालाः शास्त्रेऽस्मिन् यतः सन्ति संविभक्ताः, अतः पञ्चरात्राह्वयमिदं शास्त्रमिति मन्तव्यम्। "तैरिष्टः पञ्चकालज्ञै-र्हरिरेकान्तिभिर्नरैः" (१२/३३६/४६), "तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम" (१२/३३७/३०) इत्येवं नारायणीयेऽपि स्मर्यन्ते पञ्चकालाः पञ्चयज्ञाश्चेमे। श्रूयते च शतपथब्राह्मणे (१३/६/१) पाञ्चरात्रसत्रम्। वैदिके वाङ्मये रात्रिशब्दो वर्ततेऽहोरात्रस्य वाचकः। तदनुसारं पाञ्चरात्रसत्रमिदं पञ्चभिरहोरात्रैः सम्पादनीयं स्यात्। अत्र चैकमेवाहोरात्रं पञ्चसु कालेषु

---

१. "काण्वीं शाखामधीयानावौपगायनकौशिकौ। शाण्डिल्यश्च भरद्वाजो मुनिर्मौञ्जायनस्तथा॥ इमौ च पञ्चगोत्रस्था मुख्याः काण्वीमुपाश्रिताः।" (पृ० १५) इति जयाख्यायामधिके पाठे दृश्यते। ईश्वर-संहितायां तु—"पुरा तोताद्रिशिखरे शाण्डिल्योऽपि महामुनिः॥—सुमन्तुं जैमिनिं चैव भृगुं चैवौपगायनम्। मौञ्ज्यायनं च तं वेदं सम्यगध्यापयत् पुरा॥"' एष एकायनो वेदः प्रख्यातः सर्वतो भुवि।" (१/३८, ४१, ४३)।

२. "इयं शुक्लयजुःशाखा प्रथमेत्यभिधीयते। मूलशाखेति चाप्युक्ता तथा चैकायनीति च॥" इति। मद्रास-राजकीयग्रन्थालयसूची (पृ० ३३००) द्रष्टव्या। अस्या मातृकायाः संख्या २३८९ वर्तते।

३. "अर्ली हिस्ट्री आफ दि वैष्णव सेक्ट" इत्याख्ये, "वैष्णविज्म शैविज्म एण्ड अदर माइनर रिलीजस सिस्टम्स्" इत्याख्ये च ग्रन्थे क्रमशो द्रष्टव्यमेतत्।

विभज्य तत्र भगवानिज्यते। कालसंकोचेऽस्मिन् किं कारणमिति न जानीमः। पाञ्चरात्र; संज्ञाप्रवृत्तिनिमित्तं त्वत्रैव निहितामिति वयं भणामः। "पञ्चकालरतश्चैव पञ्चरात्रार्थवित्तथा" (१६/९) इति जयाख्यवचने पञ्चकालपञ्चरात्रयोः पृथङ्निर्देशान्नैतत् सम्भवतीति पाञ्चरात्र-रक्षासम्पादकः श्रीदुरैस्वामिमहोदयः स्वकीये संस्कृतोपोद्घाते (पृ० ३९) प्रतिपादयति। तन्न विचारचारु, पञ्चरात्रार्थविदेव पञ्चकालरतो भगवतीत्येतत्प्रदर्शनाय तत्रोभयोरप्येतयोः पदयोः प्रयोगस्य सार्थक्यात्, पञ्चरात्रशास्त्रं जानाति तदनुरूपमाचरतीति जयाख्यवचनस्याभिप्राय-त्वात्। डॉ० श्रादरमहोदयस्तु[1] पर-व्यूह-विभवादीनां पञ्चस्वरूपाणां प्रतिपादकत्वादिदं शास्त्रं पाञ्चरात्राभिधया प्रथितमिति प्रतीयते इत्याह। तन्न। सात्वतसंहितायां पर-व्यूह-विभवाख्यस्य परब्रह्मणो रूपत्रयस्यैव प्रतिपादनदर्शनात्।

## पाञ्चरात्रीयं वाङ्मयम्

सात्वतं पौष्करं जयाख्यं चेति संहितात्रयं पाञ्चरात्रागमेषु रत्नत्रयनाम्ना प्रसिद्ध्यति। "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च कीर्तनीयश्च सर्वदा।" सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः। द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च॥" (६६/३९-४०) इति महाभारतीयभीष्मपर्ववचने सात्वतसंहिता स्मर्यत इति तत्सम्पादकः श्रीमान् अनन्ताचार्यः कथयति। डॉ० श्रादरमहोदयस्तन्नाङ्गीकरोति[2]। "द्वापरवेलायाम्" (१/७१), "द्वापरसन्ध्यंशे" (१/७३), "प्राप्तं सङ्कर्षणात्" (२/४) इत्यहिर्बुध्न्यसंहितावचनैस्तत्राप्येतद् महाभारतवचनं संगमयितुं शक्यत इति स वदति। अपि च, सङ्कर्षणसंहिताऽपि स्वतन्त्रा समुपलभ्यते, या हि वेदान्तदेशिकेन पाञ्चरात्ररक्षायां (पृ० ११५) स्मृतेति। अत्रोच्यते—सात्वतसंहिता हि हलिना प्रार्थितेन भगवता चक्रपाणिना साक्षात् तस्मै समुपदिष्टा, तेन सा लोके प्रचारितेत्यस्या एव प्राधान्यं मन्तव्यम्। अहिर्बुध्न्यसंहिता तु न भगवता साक्षादुपदिष्टा, अपि तु सङ्कर्षणादहिर्बुध्न्येनो-पलब्धा। अत्र (५/५९) सात्वतसंहिता स्मर्यत इति हि स्वयमेव स्वीकरोति डॉ० श्रादर-महोदयः[3]। सात्वतविधीनां सर्वाङ्गपूर्णं संक्षिप्तं च[4] विवेचनं सात्वतसंहितायां विहितम्। तेनापि तस्या एव प्राचीनत्वं वैशिष्टयं चापि ख्याप्यते।

सात्वतायां (९/१३३) पौष्करं वाराहं प्राजापत्यं (ब्राह्मं) चेति संहितात्रयं स्मर्यते[5] इत्यपि न साधु, अयं हि वर्तते तत्रत्यः पाठः—"यः स्थितस्त्रिविधे सर्गे विभवः पारमेश्वर। पौष्कराख्ये च वाराहे प्राजापत्ये महामते॥"[6] इति। एवं चात्र त्रिविधः सर्गः प्रतिपादितः, न

---

१. "इण्ट्रोडक्शन टू दि पांचरात्र एण्ड दि अहिर्बुध्न्यसंहिता" इत्याख्यस्तस्य ग्रन्थो द्रष्टव्यः (पृ० २५-२६)।

२. तत्रैव, पृ० १५-१६

३. तत्रैव, पृ० २०

४. "सर्वसंहितासारभूते श्रीसात्वते" (पृ० ४३), "भगवच्छास्त्रसारभूते श्रीसात्वते" (पृ० ७९) इति सच्चरित्ररक्षायां वेदान्तदेशिकाचार्यः प्रतिपादयति।

५. इण्ट्रोडक्शन०, पृ० २०; डॉ० एच० डेनियलस्मिथमहोदयोऽप्येवमेवाह (ए डिस्क्रिप्टिव बिब्लिओग्राफी आफ दि पांचरात्रागम, भा० १, पृ० ५३५)।

६. सात्वतसंहिता (९/१३२-१३३) तत्रत्यं भाष्यं च प्रष्टव्यम्।

संहितात्रयम्। एष त्रिविधः सर्गो भागवतोद्धरणपुरस्सरं व्याख्यातो भाष्यकारेणालशिङ्गभट्टेन (पृ. १९८-१९९)। तथा च प्राचीनसंहिताकालक्रमनिर्धारणवेलायां[1] स्थापितमेतन्नामत्रयमलीकप्रायमिति सात्वतसंहितैव प्राचीनतमा सिद्धयति।

रत्नत्रयनाम्ना प्रसिद्धासु संहितासु सात्वतं पौष्करं जयाख्यं चेति क्रमः संदृश्यते। यादवाचले[2] सात्वतविधिना, श्रीरङ्गे पौष्करपद्धत्या हस्तिशैले च जयाख्यानुसारं हरिः सम्पूज्यत इति स्थानभेदेन सर्वासामासामप्रतिहतं समानं च प्रामाण्यम्। कालपर्ययात् सात्वतनिष्ठैरीश्वरसंहिता, पौष्करनिष्ठैः पारमेश्वरसंहिता जयानिष्ठैश्च पाद्मसंहिता सबहुमानमादृता। लक्ष्मीतन्त्रमहिर्बुध्न्यसंहिता च सात्वतोपबृंहकतया[3] स्वीक्रियेते। पाञ्चरात्रसंहितासु नवरत्नपञ्चरत्नादिविभागोऽपि दृश्यते। तत्र परमसंहिता मुख्या श्रीभाष्यकारेण रामानुजेन श्रीभाष्ये (२/२) सादरं स्मर्यते। यामुनाचार्यरामानुज-वेदान्तदेशिकादिस्मृतानाम्, तासु तासु पाञ्चरात्रसंहितासु चर्चितानां च त्रिशतप्रायाणां संहितानां परिचयो वैशद्येन भारतीयैः पाश्चात्यैश्च विद्वद्भिर्विहित इति नात्र प्रयत्यते। अत्र विशेषजिज्ञासुभिरहिर्बुध्न्यसंहिता-लक्ष्मीतन्त्र-अनिरुद्धसंहिताभूमिकाः, पेनारोमा आफ पाञ्चरात्र लिटरेचर, ए डिस्क्रिप्टिव बिब्लिओग्राफी आफ दी प्रिण्टेड टेक्स्ट आफ दी पाञ्चरात्रागम"—इत्यादयो ग्रन्थाश्च द्रष्टव्याः।

## पाञ्चरात्रीयं दर्शनम्

जयाख्यसंहितायाम्[4], अहिर्बुध्न्यसंहितायाम्, लक्ष्मीतन्त्रे च यथा ग्रन्थारम्भे साटोपं दार्शनिकं विवेचनं वर्तते, न तथा दृश्यते सात्वतायाम्। तदीयमेव च पाञ्चरात्रीयं दर्शनं सर्वत्र प्रवर्तते। तत्र च दर्शनयोगयोः प्रतिपादका अंशाः प्रायः सम्पूर्णे ग्रन्थे विप्रकीर्णाः सन्ति। अतोऽत्र तान् संगृह्य किमप्युच्यते।

## त्रिविधं परं ब्रह्म

"त्रिविधेन प्रकारेण परमं ब्रह्म शाश्वतम्। आराधयन्ति ये तेषां रागस्तिष्ठति दूरतः।।" (१/२३) इति परब्रह्मणस्त्रिविधां सत्तां संसूच्य—"षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्। सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।। परमेतत् समाख्यातमेकं सर्वाश्रयं प्रभुम्।" (१/२५-२६) इत्येवं परब्रह्मणः स्वरूपमत्र वर्णितम्। तदनु—"एतत्पूर्वं त्रयं चान्यज्ज्ञानाद्यैर्भेदितं-गुणैः।। विद्धि तद्व्यूहसंज्ञं सन्निःश्रेयसफलप्रदम्।" (१/२६-२७) इत्येवं वासुदेवसङ्कर्षणप्रद्युम्नाऽनिरुद्धाख्यस्य व्यूहचतुष्टयस्य स्वरूपं निरूप्य, "गुणानुवृत्तिभेदेन युक्तं ज्ञानादिकैर्गुणैः। नानाकृति

---

१. इण्ट्रोडक्शन०, पृ० २०

२. तथा चेश्वरसंहितायाम्—'एतत्तन्त्रत्रयोक्तेन विधिना यादवाचले। श्रीरङ्गे हस्तिशैले च क्रमात् सम्पूज्यते हरिः।।" (१/६७) इति।

३. सात्वतसंहिताया अलशिङ्गभट्टविरचितं भाष्यं द्रष्टव्यम् (पृ० ७१, १२८, १५२, २५५)।

४. जयाख्यसंहिताया दार्शनिकं विवेचनं डॉ० सुरेन्द्रनाथदासगुप्तकृते दर्शनेतिहासे तृतीये खण्डे, अहिर्बुध्न्यसंहिताया डॉ० श्रादरकृते भूमिकाग्रन्थे, लक्ष्मीतन्त्रस्य च डॉ० अशोककुमारकालियाकृते "लक्ष्मीतन्त्र : धर्म और दर्शन" इत्याख्ये ग्रन्थे द्रष्टव्यम्।

च तद्विद्धि वैभवं भुक्तिमुक्तिदम् ॥" (१/२७) इति संक्षेपेण विभवस्वरूपं व्याख्यातम् ।

अत्र पराशरभट्टपादा विष्णुसहस्रनामभाष्येऽमुमेव ग्रन्थं व्याकुर्वन्त एवमाहुः—"परव्यूह-विभवात्मना त्रिविधं परब्रह्मेति भागवतसिद्धान्तः। तत्र परं नामाकार्यं कार्या(दन)वच्छिन्न-पूर्णषाड्गुण्यमहार्णवोत्कलिकैकातपत्रीकृतनिस्समनित्यभोगविभूतिकं मुक्तोपसृप्यमनौपाधिकम-वस्थानम् । व्यूहश्च मुमुक्षुसिसृक्षया प्रदेयसृष्टिस्थितिलयाः शास्त्रतदर्थतत्फलानि ध्यानाराधने लीला चेतीदृशकार्योपभुक्तिविभवपरगुणरूपव्यापारशीकरव्यूहनिर्वाहितलीलाविभूतिकं मुक्ति-साधकं चतुर्धावस्थानम् । विभवश्च तच्छायः सुरनरतिर्यगादिः स्वविभवसजातीय ऐच्छः प्रादु-र्भाववर्ग इति ।···तत्र प्रादुर्भावाः के चित् साक्षात्, यथा मत्स्यकूर्मादयः । अन्ये तु ऋष्यादि-विशिष्टपुरुषाधिष्ठानेन, यथा भार्गवरामकृष्णद्वैपायनादयः । अपरे काले शक्त्यावेशेन, यथा[1] पुरञ्जयादिषु । इतरे च व्यक्तिषु स्वयमेवावतीर्य, यथार्चावतार इति चतुर्धा" (पृ० १८२) इति ।

अत्र पराशरभट्टारकेण विभवानां चातुर्विध्यं प्रदर्श्याऽर्चावतारस्य तत्रैवान्तर्भावः प्रदर्शितः । लक्ष्मीतन्त्रे तु—"अर्चापि लौकिकी या सा भगवद्भावितात्मनाम् । मन्त्रमन्त्रेश्वर-न्यासात् सापि षाड्गुण्यविग्रहा ॥ पराद्यर्चावतारेऽस्मिन् मम रूपचतुष्टये ।" (२/५९-६०) इत्येवं चातुर्विध्यं परब्रह्मणः प्रतन्यते । अत्रार्चावतारस्य स्पष्टं पृथङ्निर्देशो विद्यते । वस्तुतस्तु—गुण-कल्पनयाऽध्यस्तो गुणोन्मेषकृतश्रमः । मूर्तीभूतगुणश्चेति त्रिधा मार्गोऽयमद्भुतः ॥" (२/३९) इत्येवं लक्ष्मीतन्त्रेऽपि त्रैविध्यमेव परब्रह्मणो वर्ण्यते ।" व्याप्तिनमात्रं गुणोन्मेषो मूर्तीकार इति त्रिधा "(५/२०) इत्यहिर्बुध्न्यवचनस्यैव व्याख्यानमेतत् । तथापि" मूर्तीभूतगुणत्वरूपं विभवत्वं विभवार्चावतारयोरुभयत्रापि" समानम् (पृ. ११) इति भाष्यकारदिशा लक्ष्मीतन्त्रोक्तं परब्रह्मणश्चातुर्विध्यमपि[2] समर्थनीयम् ।

तत्त्वत्रयव्याख्यानधृतविष्वक्सेनसंहितायां तु परब्रह्मणः [2]पर-व्यूह-विभव-अन्तर्यामि-अर्चावतारभेदेन पञ्चप्रकारत्वमुपदिश्यते । तथैवोपपादितमेतत् तत्त्वत्रये तद्व्याख्याने च[3] । यतीन्द्रमतदीपिकाकारश्रीनिवासदासादयो[4] रामानुजसम्प्रदायानुयायिनः श्रीवैष्णवास्तदेतत् पञ्च-विधं परं ब्रह्मैवोपासते । एवं चातुर्विध्ये पाञ्चविध्ये वा सत्यपि सात्वतनिष्ठैस्त्रिविधं परब्रह्म उपास्यते । विभवावतारस्य पराशरभट्टारकदिशा चातुर्विध्ये स्वीकृते न कोऽपि विरोधोऽत्राव-शिष्यते । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥" (१८/६१) इति भगवद्गीतोक्त्याऽन्तर्यामिस्वरूपस्य ब्रह्मणः सत्त्वं सिद्ध्यत्येव । अत्रापि—

---

१. शक्त्याविष्टस्य पुरञ्जनस्य कथानकमेतत्—"तेजसाऽऽप्यायितो विष्णोः पुरुषस्य महात्मनः" (९/६/१३) इत्येवं श्रीमद्भागवते वर्ण्यते ।

२. वरवरमुनिविरचितव्याख्यानसहितस्य तत्त्वत्रयस्य वाराणसीमुद्रितं द्वितीयं संस्करणमवलोकनीयम् (पृ० १०१-१०२) ।

३. तत्रैव १०१-१२० पृष्ठानि द्रष्टव्यानि ।

४. यतीन्द्रमतदीपिका पुण्यपत्तनस्थानन्दाश्रमग्रन्थावलिप्रकाशिता (१९३४ ई० वर्षीयं द्वितीयं संस्करणम्, पृ० ८३-८९) द्रष्टव्या । डॉ० आदरमहोदयेनापि स्वकीये भूमिकाग्रन्थे शुद्धसृष्टिनिरूपणप्रकरणे तत्त्वत्रय—यतीन्द्रमतदीपिकासाहाय्येन तदेतद् पञ्चविधं परं ब्रह्म व्याख्यातम् ।

"परमेश्वरः ॥ स्थितोऽन्तर्यामिभावेन रूपमासाद्य निष्कलम्" (६/६६-६७) इत्येवं ब्रह्मणोऽन्तर्यामित्वं[1] निष्कलत्वं च प्रतिपाद्यते। एवं सत्यपि सात्वतायां त्रिविधस्य परब्रह्मण एवोपासना सविस्तरं वर्णिता ।

## परब्रह्मलक्षणम्

"सर्वगं परमं ज्योतिरमूर्तममलं हि यत् ॥ स एव वासुदेवेति" (८/५२-५३), "महस्तु सततोदितम्" (८/५६) इति सततोदितं वासुदेवाख्यं परं ब्रह्म[2] भूतावास (८/१५१) पदेन, "नारायणः परं ब्रह्म" (१७/४१६) इति[3] नारायणपदेन च प्रोच्यते।" चिदानन्दघनः शान्तः" (६/२१३) इति चिच्छक्तिलक्षणं ब्रह्मत्वाह्लादानन्दलक्षणम्" (२०/१३) इति च तस्य चिदानन्दलक्षणत्वं बोध्यते। "सद् ब्रह्मवासुदेवाख्य०" (२/४) इति सदात्मकत्वं च तस्य प्रोच्यते। एवं च सच्चिदानन्दलक्षणत्वं ब्रह्मणोऽत्रापि स्वीक्रियते। तदेतस्य परस्य ब्रह्मण आराधनाय द्वितीयपरिच्छेदे "ॐ शान्तोदितविज्ञानप्राणाय०" (पृ० १७) इत्यादिकं मन्त्रमुद्धरन्त्या सात्वतया दशाद्वयमुररीक्रियते। तत्र प्रथमा सततोदिता नित्योदिता वा, अपरा च शान्तोदिता संगीयते।

## परब्रह्मणो दशाद्वयम्

तत्र सततोदितया नित्योदिताऽपरनामधेयया दशया युक्तः परवासुदेव इति, शान्तोदितया च दशया युक्तो व्यूहवासुदेव इत्युच्यते। परवासुदेवे षाड्गुण्यं स्तिमितं व्यूहवासुदेवे च प्रबुद्धमवतिष्ठते। शान्तोदितो व्यूहवासुदेवः षाड्गुण्यमहिम्ना यथायथं शान्तेषु चतुर्षु गुणेषु प्रवुद्धयोश्च द्वयोर्द्वयोर्गुणयोः साहाय्येन क्रमशः सङ्कर्षण-प्रद्युम्न-अनिरुद्धाख्यानि त्रीणि रूपाणि धत्ते। एवं च परब्रह्मणश्चातुरात्म्यं निष्पन्नं भवति व्यूहाख्यम्। व्यूहदीक्षावसरे तदेतत् "चतुरात्मानमव्यक्तं शब्दमूर्ति निराकृतिम्। गुणमात्रैर्विभिन्नं च" (१८/२०७-२११) इत्यादिषु श्लोकेषु वर्ण्यते। चातुरात्म्यं चैतज्जाग्रत्स्वप्नसुषुप्तितुर्याख्येषु चतुर्षु पदेष्ववतिष्ठते। तत्र तुर्यपदस्थिते परब्रह्मणि चातुरात्म्यं स्तिमितं भवतीत्येकमूर्तिपदेन तदुच्यते, एकेनैव च मन्त्रेण तदाराधनं क्रियते। सुषुप्तिस्वप्नजाग्रत्पदेषु च चातुरात्म्यस्य प्रबुद्धत्वात् तदाराधनाय पृथक् पृथक् चत्वारो मन्त्रा विनियुज्यन्ते। तदेतच्चातुरात्म्यचतुष्टयसमाराधनमस्माभिः सात्वतसंहिताया उपोद्घाते (पृ०

---

१. ब्रह्मणो निष्कलं सकलं च स्वरूपं तन्त्रागमेषु प्रतिपाद्यते। अत्रापि विभवपरिच्छेदे तत्प्रदर्शितम्। अन्तर्यामितया निष्कलात्मना च स्थित आप्तकामो भगवान् स्वव्यापारवशेन स्वां शक्तिमवलम्ब्य पद्मनाभाद्यात्मना सकल स्वरूपं धत्ते (६/६७/६८) विभवात्मकोऽयं भगवानत्र निष्कलात्मना सकलात्मना चार्च्यत्वेन वर्णितः (६/११४/११५)।

२. 'वसन्ति त्वयि भूतानि भूतावासस्ततो हरे" इत्येवं विष्णुसहस्रनामभाष्ये पराशरभट्टेन भूतावासशब्दो व्याख्यातः। एवं च भूतावासपदं वासुदेवस्यैव पर्यायान्तरम्।

३. "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं मम तत् पूर्वमतो नारायणो ह्यहम् ॥" (महाभारते शान्तिपर्वणि, (३४१/४०) "ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः" (१/१०) इति मनुस्मृतौ पाठान्तरम्। नारायणीयोपाख्यानेऽत्र वासुदेव एव नारायणो निर्दिष्टः। रामानुजीये च दर्शने लक्ष्मीनारायणाख्यं मह एव परब्रह्मत्वेनोपास्यते। तथैव च प्रतिपाद्यते लक्ष्मीतन्त्रेऽपि (१/१; २२/५) इत्यादिषु स्थलेषु।

२२-२६) विस्तरेण विवेचितमिति तत एवावलोकनीयम्।

## व्यूहान्तरम्

जीवानां संसारखेदनिवृत्त्यर्थं वासुदेवादिचतुष्टयमेव प्रत्येकं त्रिधा विभक्तं भवति। तद्यथा—वासुदेवः केशव-नारायण-माधवरूपेण, सङ्कर्षणो गोविन्द-विष्णु-मधुसूदनरूपेण, प्रद्युम्नस्त्रिविक्रम-वामन-श्रीधररूपेण, अनिरुद्धश्च हृषीकेश-पद्मनाभ-दामोदररूपेण व्यक्तचक्रादिलाञ्छनैः सह भगवदेकान्तिनां पोषकत्वेन शाश्वतीमभिव्यक्तिमभ्येतीति सप्तमे परिच्छेदे—'परं ब्रह्म परं धाम" (७/३) इत्यादिना ग्रन्थेन प्रतिपाद्यते। एतच्च द्वादशविधं स्वरूपमहिर्बुध्न्ये व्यूहान्तरपदेन निरुक्तम्—"व्यूहान्तरं दश द्वे च केशवाद्याः प्रकीर्तिताः" (५/४६) इति। सात्वतास्थमूर्त्यन्तर पदेन (२५-३२२) व्यूहान्तरमेवोच्यत इति भाष्यकारः (पृ० ५४१)। द्वादश व्यूहान्तराणीमानि द्वादशमासाधिपतित्वेन व्याख्यायन्ते पुराणेष्वागमेषु च। इमां व्यूहान्तराख्यामभिव्यक्तिं समवलम्ब्य[1] सुप्रबुद्धः साधको दानधर्मव्रतादीनामाचरणेन संसारानलादस्मादचिरादेव मुक्तः सन् शाश्वतीं शान्तिमधिगच्छति।

## एकोनचत्वारिंशद्विभवाः

ब्रह्मणो विभवात्मनस्तृतीयस्य स्वरूपस्य वर्णनमन्तर्यामिविधिमुखेन सात्वतायां नवमे परिच्छेदे निरुच्यते। तथाहि—विभवावतारस्य स्थूलसूक्ष्मपरत्वेन प्रथमं त्रैविध्यं भवति। कामरूपधरो देवः कार्यारम्भे मध्येऽवसाने च सृष्टिस्थितिसंहारकालेष्वेक एवानेकधा रूपे सन्धत्ते। सृष्टिकाले रक्तं रूपम्, रक्षणकाले शुक्लं रूपम्, संहारकाले च कृष्णं रूपं बिभर्ति। एतदेव वैभवं स्थूलं रूपम्। समाधिनिरतानां सन्मार्गप्रकाशकं रूपं सूक्ष्मसंज्ञम्। तेजोमयं च वैभवं रूपं परात्मकमिति[2] मन्तव्यम् (९/४-११)।

अस्य विभवरूपस्याराधनार्थं संज्ञा-पद-पिण्ड-बीजभेद-भिन्नश्चतुर्विधो वाचकोऽत्र निर्दिष्टः। तत्र बीजपिण्डमन्त्रयोरन्यतरेण, संज्ञापदमन्त्रयोरन्यतरेण, उभयेनाप्यभिन्नरूपेण वा एकस्यैव वाच्यात्मकस्य भगवतोऽर्चनं क्रियते। तत्र संज्ञामन्त्रा नाममन्त्रा इत्यप्युच्यन्ते। मूलमन्त्राङ्गमन्त्रादिभेदैरेते बहुविधा भवन्ति। वैभवाः पिण्डमन्त्राः[3] पदमन्त्राश्च सात्वतायां त्रयो-

---

१. शब्दोऽयं शैवेषु शाक्तेषु च तन्त्रेषु योगवासिष्ठादिग्रन्थेषु च बहुधा प्रयुक्तो दृश्यते। तत्र विरूपाक्षपञ्चाशिकायां पञ्चविधा जीवाः प्रतिपाद्यन्ते—अप्रबुद्धः, प्रबुद्धकल्पः, प्रबुद्धः, सुप्रबुद्धकल्पः, सुप्रबुद्ध इति। एतेषां लक्षणानि तत्रैव ४१-४४ श्लोकेषु द्रष्टव्यानि।

२. सात्वतसंहिताभाष्यकारेणालशिङ्गभट्टेनास्मिन् प्रकरणे स्थूल-सूक्ष्म-पररूपलक्षका जयाख्यश्लोकाः (४/२३-२५) समुद्धृताः। नवमें परिच्छेदे सात्वतायां वैभवीयं रूपं व्याख्यायते, तस्यैव च भेदाः प्रदर्श्यन्ते—"वैभवीयो महाबुद्धे देवतानिचयो महान्। य उक्तस्ते मया पूर्वमेकैकं विद्धि तत् त्रिधा॥" (९/४) इति। जयाख्यायां चोक्ते प्रकरणे ब्रह्मणस्त्रैविध्यं प्रतिपाद्यते। एवं चात्रत्ये वैभवीये प्रकरणे तेषां श्लोकानामुद्धारोऽनुचित इवाभाति।

३. पञ्च व्यापकमन्त्रा एव वासुदेवादीनां पदमन्त्रा इति भाष्यकारेणात्र (पृ० १०१, १२७) लक्ष्मीतन्त्रप्रामाण्येन प्रतिपादितम्. वासुदेवादीनां पिण्डमन्त्राश्चाष्टमे परिच्छेदे (श्लो० १०-१४) समुद्धृता दृश्यन्ते।

विंशे परिच्छेदे विवृताः। "स्वरोत्थं व्यञ्जनोत्थं वा बीजमेकाक्षरं स्मृतम् ॥ स्वरव्यञ्जनसंयोगाद् बह्वर्णः पिण्डमन्त्रराट्।" (९/१८-१९) इत्यत्र च बीजपिण्डयोः स्वरूपं वर्ण्यते। एतेषु पदात्मनो मन्त्रस्य जाग्रद्वृत्तित्वम्, संज्ञात्मनः स्वप्नवृत्तित्वम्, पिण्डाख्यस्य सुषुप्तिवृत्तित्वम्, बीजात्मनश्च तुर्यवृत्तित्वमवसेयम्।

विशाखयूपो भगवान् स्वयं विश्वसिसृक्षया आद्यपदस्थस्य चातुरात्म्यस्य तुर्यव्यूहस्य शुद्धसंवित्पुरस्सरं महिमानमादाय व्यूहविभवावतारसाधनोपकरणं सर्वं संगृह्य वासुदेवाद्यं मूर्तिशाखाचतुष्टयं विहाय तथैव वैभवीयस्य यूथस्य पतित्वेनावतिष्ठते, यथा किल अर्ककिरणव्रातं त्यक्त्वा महान् तेजःकणः स्वकारणं विना सर्वं गोचरमापूरयति। स एव सम्भूति-स्थिति-संहार-भोग-कैवल्यलक्षणं[1] पञ्चारमिदं संसारचक्रं स्वधिया प्रेरयति। भगवतो विशाखयूपादेव पद्मनाभादीनामष्टत्रिंशद्विभवदेवानामाविर्भावो जायते। एतेषां विभवदेवानामाराधनाय तेषां बीजानि द्वितीयपरिच्छेदोक्तवर्णचक्रापेक्षया किञ्चिद्विलक्षणेन शब्दब्रह्ममयेन वर्णचक्रेण (९/६२-७६) समुद्धृतानि। एषां[2] बीजानां वाच्याः सर्वेश्वरो विशाखयूपः पद्मनाभादयो देवाश्च सन्ति। अन्तर्यागविधौ बीजात्मनैव ते समाराध्यन्त इति भावः।

अहिर्बुध्न्यसंहितायामेकोनचत्वारिंशद्विभवदेवाः प्रतिपादिताः—"त्रिंशच्च नव चैवैते पद्मनाभादयो मताः" (५/५७) इति। अत्र भाष्यकारेण—पद्मनाभादयोऽष्टत्रिंशद्विभवदेवाः, तेषामधिपतिर्विशाखयूपस्त्वेकः, तेन सहैकोनचत्वारिंशद्देवा इत्यभिप्रायेण "त्रिंशच्च नव चैवैते इत्युक्तम्" (पृ० १८८) इति व्यवस्था दत्ता। डॉ० श्रादरमहोदयेन तु स्वकीये ग्रन्थे (पृ० ४२-४६) विशाखयूपं विहाय पद्मनाभादिष्वेकोनचत्वारिंशत्संख्यापूर्तये शान्तात्मा (२५) पृथग् देवत्वेन वर्णितः। अहिर्बुध्न्यसंहितासंस्करणेऽपि (५६/३३) शान्तात्मनः पृथगुल्लेखो विहितस्तेन। सात्वतसंहितायां (१२/११०) शान्तात्मनो ध्यानं विद्यत इति च स वदति (तत्रैव, ४६ पृ० टिप्पण्याम्)। एतच्च सर्वमसदिति विभावनीयं सुधीभिः।

तथा हि—विभवदेवेषु "लोकनाथस्तु शान्तात्मा" (९/८१) इत्येवं सविशेषणं लोकनाथो वर्ण्यते। "शान्तात्मेति लोकनाथस्य विशेषणम् (पृ० १८४) इति हि भाष्यकारः। द्वादशे परिच्छेदेऽस्य ध्यानमेवं वर्ण्यते—"लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ॥ वरसिंहासनारूढं ध्याये-

---

१. सम्भूति-स्थिति-संहार-भोग-कैवल्यलक्षणं पञ्चारमिदं संसारचक्रमत्र (९/५७) प्रतिपाद्यते। शैवशाक्ततन्त्रेषु वर्णितेन सृष्टि-स्थिति-संहार-निग्रह-अनुग्रहाख्येन कृत्यपञ्चकेन चैतत् तुलयितुं शक्यते। प्रवृत्तिमार्गोपदेशकेषु वैष्णवागमेषु हि कर्मणामेव भोगमोक्षप्रदत्वं निर्दिष्टमिति भोगमोक्षपदाभ्यामेवावशिष्टं कृत्यद्वयं निर्दिष्टमत्र। ऐहिकाः पारलौकिकाश्च भोगा अपि भगवत्स्वरूपा एवेति तेषां निरोधकत्वं तिरोधायकत्वं वा नाङ्गीक्रियते। निग्रहानुग्रहौ शाङ्करवेदान्तसम्मताभ्यामध्यारोपापवादाभ्यां तुलयितुं शक्येते। नाहि वैष्णवागमेषु शाङ्करमतप्रभाव इति सर्वत्र सद्ब्रह्मावलोकयतां मतेऽस्मिन् कृत्यद्वयमेतद् भोग कैवल्यलक्षणमुपदिश्यते। शाक्ते च क्रमदर्शने तदेतदनाख्याभासापदाभ्यां निर्दिष्टम्।

२. परस्य व्यूह चतुष्टयस्य च बीजमन्त्राः पञ्चब्रह्म-ब्रह्मपञ्चक-ब्रह्मबीजचतुष्टयपदैर्लक्ष्मीतन्त्रप्रभृतिषु (१९/१६-१७, ३०-३३) वर्णिता द्रष्टव्याः। सात्वतसंहिताभाष्ये १४४-१४८ पृष्ठेषु व्यूहानां षडङ्गानां व्यूहान्तराणां तद्देवीनां च बीजान्युद्धृतानि सन्ति। एतेषां पिण्डमन्त्रेष्वन्तर्भावः कर्तुं शक्यते। विभवदेवानां बीजमन्त्राः सात्वतभाष्ये (पृ० १८३-१८४) द्रष्टव्याः।

न्मीलितलोचनम्। पद्मासनेनोपविष्टं पद्मगर्भोपमद्युतिम् ।। करणाविमष्टबुद्धिं च शङ्खपद्मकराङ्कितम् । ज्ञानवैराग्यसद्धर्ममार्गत्रयनिदर्शकम् ।।" (१२/१०८-११०) इति ।। "अस्य रूपान्तरं बुद्धावतार इति बोध्यम्" (पृ० २३९) इत्युक्त्वा भाष्यकारः पौष्करसंहितावचनमेवं समुद्धरति— "लोकेश्वरः शान्ततनुर्बौद्धं यस्यापरं वपुः । नियन्ता बुद्धिधर्माणां हिंसादोषस्य दूषकः ।।" [३६/२२६] इति । अस्य स्थानं च पौष्करप्रामाण्येनैव प्रदर्शयति—"मगधामण्डले विप्र महोबोधधराश्रितः । संस्थितो लोकनाथात्मा देवदेवो जनार्दनः" (३६/३५९-३६०) इति ।

ततो भाष्यकारः—"तत्त्वत्रयव्याख्याने (पृ० ११०) बुद्धस्य साक्षादवतारत्वमाचार्यहृदये प्रतिपादितम् । विष्वक्सेनसंहितादिषु तस्यावेशावतारत्वमुक्तम् । उभयोर्विरोधः कल्पभेदेन परिहरणीयः" (पृ० १८७) इति वदत्यस्मिन् प्रसङ्गे । तत्त्वत्रयव्याख्यानधृतविष्वक्सेनसंहितायामनर्चप्रादुर्भावप्रसङ्गे—"मोहनाख्यस्तथा बुद्धः" (पृ० ११०) इत्युच्यते । तत्रैवोद्धृतसंहितान्तरेऽपि बुद्धाद्या अनुपास्या उक्ताः (पृ० ११०) । अलशिङ्गभट्टमतानुसारं च बुद्धस्य साक्षादवतारत्वमाचार्यहृदये प्रतिपाद्यते । "स्वेन रूपेणावतीर्णवान्" इति तत्त्वत्रयव्याख्यानस्थं (पृ० ११०) वचनमाचार्यहृदयस्यैव स्यात् । न केवलमाचार्यहृदये, विष्वक्सेनसंहिताप्रतिपादितेषु षट्त्रिंशद्विभवेष्वपि लोकनाथः परिगण्यत एव । एवं च वचनयोरनयोर्विरोधः कल्पभेदेन परिहरणीय इति शास्त्रानुसारी पन्थाः । ऐतिहासिकास्तु सात्वतायां पौष्करायां च लोकनाथो विभवेषु परिगण्यते । तामनुसरन्त्यपि विष्वक्सेनसंहिता बुद्धावतारस्यानर्च्यत्वं मोहनात्मकत्वं चाहेति कालस्यैवायं महिमा मन्तव्य इत्याचक्षीरन् ।

"नरो नारायणश्चैव हरिः कृष्णस्तथैव च" (६/८२) इत्यत्र विभवावतारचतुष्टयं वर्ण्यते । अत्र भाष्यकारः—"श्रीकृष्णस्य पारिजातहरशब्देनोक्तत्वात् तदनुक्तिर्न शङ्कनीया । ननु—"नरो नारायणश्चैव हरिः कृष्णस्तथैव च" (६/८२) इति कृष्णस्तूच्यत एव, तदनुक्तिः केनोच्यत इति चेन्न, यतोऽत्र प्रतिपादितः कृष्णो न वसुदेवात्मजः, अपि तु धर्मात्मज इति बोध्यम् । तथा च पौष्करे—"धर्मात्मा भगवान् विष्णुः प्रादुर्भावं च शाश्वतम् । प्रादुर्भूतं हि वै यस्मान्नराद्यं कृष्णपश्चिमम् ।।" (३६/२०७) इति । ननु चात्र केवलकृष्णशब्दस्योक्तत्वाद् वसुदेवपुत्रः प्रसिद्धः कृष्ण एव स्यादिति चेन्न, साहचर्यविरोधाद् वक्ष्यमाण (१२/१४५-१४६) ध्यानविरोधाच्च" (पृ० १८९) इति व्याचष्टे । न केवलं कृष्णः, नराद्यं कृष्णपश्चिमं विभवावतारचतुष्टयमपि धर्मात्मजत्वेन पूर्वोद्धृतायां पौष्करायां प्रतिपाद्यते । एतच्च समर्थ्यते महाभारतवचनेनापि—"नरो नारायणश्चैव हरिः कृष्णः स्वयम्भुवः"[1] (१२/३३४/९), "एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा । धर्मस्य कुलसन्ताने···।। नरनारायणाभ्यां च कृष्णेन हरिणा तथा ।" (१२/३३४/१६-१८) इति । पौष्करायामप्युच्यते—चतुर्मूर्तिमयो विप्र नरो नारायणो हरिः । कृष्णसंज्ञश्च भगवान्" (३६/२०९) इति । एतेषां ध्यानानि सात्वतायां (१२/१३६-१४८) द्रष्टव्यानि । अत्र च नर-नारायण-हरि-कृष्णानां क्रमेण जप-योग-क्रिया-तपःपरिरक्ष-कत्वं वर्ण्यते ।

---

1. "स्वयम्भुव इत्यनेन वासुदेवस्यैवैते चत्वारो व्यूहा अजन्मानः" इति तट्टीकाकारो नीलकण्ठः ।

## शक्तीशस्तस्य शक्तयश्च

यद्यपि सर्वेषां देवानां कामरूपधरत्वमव्याहतम्, तथापि सर्वे देवा युगपत् कामरूपधरा न भवन्ति। जाग्रद्व्यूहवासुदेवादीनां मध्ये, पद्मनाभादिविभवदेवानां मध्ये वा एको जगद्रक्षणार्थं वक्त्रभुजास्त्रशक्तिवाहनभेदैर्बहुधा[1] रूपं धारयन् शक्त्यात्मसंज्ञां लभते (१२/१७३-१७६)। एतच्च स्वरूपं विभवान्तर्गतशक्त्यात्मस्वरूपाद् भिद्यते। सोऽयं शक्त्यात्मा (शक्तीशः) भगवानेकाद्येन कान्तागणेन सह षोढा स्वात्मानं विभजते। लक्ष्म्या समेतमेकं रूपम्, श्रीपुष्टयोर्मध्यस्थं द्वितीयं रूपम्, श्रियादिमायानिष्ठेन चतुष्केणावृतं तृतीयम्, शुद्ध्यादिकेन षट्केन संवृतं चतुर्थम्. क्रियाद्येन पुष्ट्यन्तकेन संवलितं पञ्चमम्, लक्ष्म्याद्येन द्विषट्केन समन्वितं च षष्ठं स्वरूपं भवति (१२/२०५-२०६)। कान्तागणोऽयं शक्तिसंघपदेनाप्यत्र (६/८४) प्रोच्यते। सर्वगस्य भगवतो य आद्योऽग्नीषोमात्मको देहो विद्यते, तत्रामिश्रं[2] भिन्नलक्षणं शक्तिद्वयं राजते। भोगार्थं लोकानुकम्पयाऽवतीर्णस्य तस्य[3] भोक्तृशक्तिर्लक्ष्मीः स्मृता, पुष्टिश्च कर्तृशक्तिः कथ्यते। एतच्चाव्ययं शक्तिद्वितयं तेनैव सह उदितम्, यस्य हि नानात्वेन शक्तिसंघरूपेण परिणामो लोकानुकम्पार्थं भवति (१३/४८-५१)।

## शक्तीशस्य मन्त्ररूपा तनुः

परमं ब्रह्म सर्वशक्तिमयेन स्वकेन स्वभावेन सहैवाभ्युदेति। यथा ओजो बलात्मना,[4] गन्धो द्रव्यात्मना, बीजं तरुस्वरूपेण, समुद्रो बुद्बुदात्मना परिणमते, एवमव्यपदेश्यायाः शक्तेः स्वे शक्तिदर्पणे स्वातन्त्र्यात् स्वेच्छया स्थितिमादाय शक्तीशो मन्त्ररूपां तनुं धत्ते (२५-१४८-१५१)। यथा हि सर्वगतो वायुर्व्यजनेन विभाव्यते, तथैव भगवानाहूतो मन्त्र-बिम्ब-कुम्भ-मण्डल-अग्नि-प्रभृतिषु व्यज्यते (६/१६-१७)। एतेषु तस्य मन्त्रशरीरमेव मुख्यं भवति। तेनैव हि

---

१. वक्त्र-भुज-अस्त्र-शक्ति-वाहनभेदैर्भगवदवताराणां स्वरूपं भिद्यत इति तत्तद्देवताध्यानावलोकनेन स्फुटीभवति। सात्वतायामस्त्राणां शक्तीनां वाहनानां च वर्णनं पृथग्रूपेणापि वर्तते। तत्र शक्तीनां वाहनानां च स्वरूपं मनागस्माभिर्वर्ण्यते मूले। भूषणलाञ्छनादीनां नामानि सात्वतायां नवमे (श्लो० ८६-८६), तेषां ध्यानादिकं च त्रयोदशे परिच्छेदे (श्लो० १-३४) द्रष्टव्यानि।

२. अमिश्रं भिन्नलक्षणमिति विशेषणद्वयेन स्पष्टमत्र शक्ति शक्तिमतोर्भेदः प्रतिपाद्यते। अहिर्बुध्न्यसंहितायां तु तृतीयेऽध्याये प्रथमं शक्तिमतः शक्तेरपृथक्सिद्धत्वं सदृष्टान्तं प्रतिपादितम् (३/२/६)। अनन्तरं च—"देवाच्छक्तिमतो भिन्ना ब्रह्मणः परमेष्ठिनः" (३/२५) इति भिन्नत्वं च निरूप्यते। भेदश्चायं धर्मधर्मिस्वरूपोऽभिमतः। एवं चाहिर्बुध्न्यसंहितास्थं शक्तिस्वरूपं प्रायः शैवैः शाक्तैश्चागमिकैः स्वीकृतस्य तस्यानुकृतिरूपं प्रतीयते।

३. भोक्तृशक्तिः कर्तृशक्तिश्चेति शक्तिद्वयमेवाहिर्बुध्न्यसंहितायां भूतिशक्तिः क्रियाशक्तिरिति च नाम्न निर्दिष्टम्। तत्र क्रियाशक्तिः शुद्धसृष्टिम्, भूतिशक्तिश्च शुद्धेतरसृष्टिं जनयति। शैवागमेषु शुद्धसृष्टेबिन्दूपादानत्वम्, अशुद्धसृष्टेश्च मायोपादानत्वं प्रतिपाद्यते। नात्र शैवशाक्तागमवच्छक्तित्रयं स्वीक्रियत इति वैशिष्ट्यं सात्वतायाः प्राचीनताद्योतकम्। लक्ष्मीतन्त्रे तु शक्तित्रयमप्यङ्गीकृतम्। तत्र शैवशाक्ततन्त्राणां स्पष्टः प्रभावः परिलक्ष्यते।

४, गन्धपदमत्र तन्मात्रपर्यायतया उन्नेयम्

भगवानन्तर्यागविधिना समाराध्यते, वाच्यवाचकभावेन च तत्र सन्तिष्ठते (६/१३३-१३४)। अत एव—"भक्तिरग्नौ गुरौ मन्त्रे शास्त्रे तदधिकारिणि" (२१/६२) इति समयपञ्चकेषु मन्त्रभक्तिरपि समावेश्यते। एष च विमलदीधितिर्मन्त्रो हृदयादवतार्यते (१७/६१)। नाभिचक्रे, हृत्पद्मे, कन्दमूले, गलावटे, भ्रूमध्ये, ब्रह्मरन्ध्रे च तस्य ध्यानं विधीयते (२१/५१)।

## प्राणाधिपतयः सत्यादयः

शक्त्यात्मा (शक्तीशः) भगवान् यदा वाहनरूपं धारयति, तदा सत्य-सुपर्ण-गरुड-तार्क्ष्य-विहगेश्वररूपेण विवर्तते। "पञ्चात्मकस्य प्राणस्य विकारस्त्वेष पञ्चधा" (१२/१७८), "अपानादि-समीराणामाधिपत्येन संस्थिताः" (१२/१८४) इति हि प्रोच्यते सात्वतायाम्। सत्यादीनां स्वरूपध्यानादिकं तत्रैव (१२/१७८-२०२) द्रष्टव्यम्। अत्रैव वाहनारूढस्य द्विभुजस्य शक्तीशस्य स्वरूपमप्यवलोकनीयम् (१२/२०३-२०५)। भुजवक्त्रवर्णभिन्नस्य शक्तीशस्याशीत्युत्तरचतुःशताधिकसहस्रभेदा भवन्तीति—"पुनश्चतुर्भुजस्यैवम्" (१२/२१३-२३६) इत्यादिना प्रतिपाद्यते। सोऽयं शक्तीशो विहगेश्वरारूढो राजते (१२/२०२-२०३)। अनिरुद्ध-प्रद्युम्न-सङ्कर्षण-वासुदेवाश्च क्रमशस्तार्क्ष्य-गरुड-सुपर्ण-सत्यारूढा भवन्ति (१२/२४०-२४१)। आदिमूर्तेर्वासुदेवस्य शक्त्यात्ममूर्तेश्च वर्णलाञ्छनतुल्यत्वेऽपि तद्ध्वजद्वयमनयोर्भेदकृद् भवति (१२/२४३)। वासुदेवादीनां हस्तस्थितपद्मादिलाञ्छनानि प्रकृतकार्यानुसारेण कदाचित् शान्तरूपमङ्गीकृत्यामूर्तानि भवन्ति, कदाचिदिच्छारूपमङ्गीकृत्य मूर्तिमन्ति भवन्ति। तस्माल्लाञ्छनैर्भेदो न ज्ञायते, तत्तद्ध्वजेनैव तत्तन्मूर्तिभेदो ज्ञातव्यः (१२/२४५)।

## भवोपकरणम्

शक्तिसंघ-किरीटादिप्रधानभूषणचतुष्टय-वाहन-चक्रादिसप्तदशप्रधानायुध-अङ्गमन्त्रगणान्वितमेतत् पद्मनाभादिविभवदेवताचक्रं देवदेवस्य विशाखयूपस्य विग्रहे संलीनमवतिष्ठते (६/८४-८६)। नानाविभवमूर्तीनां शासनेऽवस्थितं भवोपकरणाख्यं गीर्वाणगणं चतुर्विंशतिसंख्याकमप्यत्र (६/६०-६५) वर्ण्यते। एतच्च प्रकरणं[1] डॉ० श्रादरमहोदयेन सटिप्पणीकं व्याख्यातम्। तदानीन्तने सात्वतसंहितासंस्करणे "समुद्राः सगणाः शिवाः" (६/६१) इति पाठो दृश्यते। एष चाशुद्धः पाठ इति तेन सम्भावितमासीत्। सम्भावनेयं सत्या तावद् दृश्यते। "सरुद्रः सगणः शिवः" इति हि शुद्धः पाठः। भाष्यकारेण चैवं व्याख्यातः—"सरुद्रः सगण इति च शिवस्य विशेषणम्। रुद्रैरेकादशभिः सह वर्तत इति तथोक्तः" (पृ० १६२) इति। भवशब्दः स्वयं संहितायामेवं विवृतः—"भवः साक्षात् प्रधानं तु व्यापको जडलक्षणः॥ मन्त्रमन्त्रेश्वरन्यासात्[2] सोऽपि पूज्यत्वमेति च (६/६५-६६)। इति। भाष्यकारेण चैवं व्याख्यातः—"भवत्यस्मात् सर्वमिति भवः,

---

१. तस्यैव ग्रन्थस्य १४६-१५० पृष्ठे द्रष्टव्ये।

२. मन्त्रस्य मन्त्रेश्वरस्य च न्यासाज्जडमपि प्रधानं यदा पूज्यत्वमेति, तदा साधको मन्त्रमन्त्रेश्वरन्यासाद् ब्रह्म सम्पद्यत इत्यत्र किमु नाम वक्तव्यम्?

प्रकृतिरित्यर्थः । प्रधानं प्रधानशब्दवाच्यः" (पृ० १६२) इति । एवं च भवोपकरणमेतद् गीर्वाणगणं प्राकृतिकजगन्निर्माणे सहायकं मन्तव्यम् । ध्यानमेषां त्रयोदशे परिच्छेदे (श्लो० ६०-६१) दृश्यते । त एते सर्वे देवाः सिद्धदशकसमन्विता दशमपरिच्छेदोक्ते मण्डले यथायथं[1] समर्च्यन्ते ।

एवमत्र परव्यूहाविभवाख्यं त्रिविधं ब्रह्म सपरिकरं व्याख्यातम् । सर्वमन्त्रमयी परा वाग्भ्रमरी शान्तात्मनः सूक्ष्मस्य विभोः शक्तिरिति सापि तथैव सूक्ष्मा निर्दिष्टा । परा वाग्भ्रमरी चैषा तैलधारावदविच्छेदेनाकारादिहकारान्तं शब्दब्रह्माख्यं नादं नदन्ती राजते । नादो हि नाम नादबिन्दुमध्यमावैखर्याख्ये शब्दब्रह्मणोऽवस्थाचतुष्टये प्रथमावस्था । "द्वे ब्रह्मणी वेदितव्ये शब्द ब्रह्म परं च यत्"[2] इति च श्रूयते । तदधुना परब्रह्मविवेचनानन्तरं शब्दब्रह्म विविच्यते ।

## शब्दब्रह्म

द्वादशे परिच्छेदे विभवावतारान्तर्गतस्य वेदव्यासस्य ध्यानप्रसङ्गे—"वाग्वेदमण्डलं यो वै स्वरूपद्युतिलक्षणम् । स्वयं स्वोत्थं विभजति नित्यं पश्यन्ति पूर्वकम् ॥ बोधमारुतहृत्पूर्वस्थानेष्वभ्युदितं क्रमात् ।" (१५/१५३-१५४) इत्यत्र शब्दब्रह्म व्याख्यायते । "स्वरूपद्युतिलक्षणम् अन्तः स्थितज्योतिः स्वरूपमित्यर्थः[3], "स्वरूपज्योतिरेवान्तर्भावयन् संस्थितं हृदि" (३४/६३) इति पौष्करोक्तेः । केवलशान्तरूपमिति यावत् । वाग्वेदमण्डलं शब्दब्रह्मेत्यर्थः । [4]पश्यन्तीपूर्वकं त्रिधा विभजति पश्यन्तीमध्यमा-वैखरीभेदैस्त्रेधा विभक्तं करोतीत्यर्थः । " बोधमारुतहृत्पूर्वस्थानेष्वभ्युदितं क्रमादिति पश्यन्त्याद्यवस्थात्रयस्य विशेषणं बोध्यम्" (पृ० २४५) इत्येवं भाष्यकारः सार्धमेतत् श्लोकं व्याचख्यौ ।

अत्र मूले स्पष्टं वाक्त्रयं तदुत्पत्तिस्थानत्रयं च प्रतिपाद्यते । भाष्यकारस्तु—"एताः शब्दब्रह्मणोऽवस्थाः सुव्यक्तमुक्ता लक्ष्मीतन्त्रे" (पृ० २४५) इत्युक्त्वा, वाक्चतुष्टयप्रतिपादकान् तत्रत्यान् श्लोकान्, "वैखरी शब्दनिष्पत्तिर्मध्यमा०" इत्युक्तिं च क्वचित्कां समुदाजहार ।

---

१. सात्वतायां नवमे परिच्छेदे परिदेवताभिः सह (श्लो० ११८, १३५) मानसार्चनम्; मूर्तौ, मण्डलमध्ये, अग्नौ, जलाशये, चार्चनमेषा भवोपकरणदेवानां विहितम् । पञ्चविंशे (श्लो० २२७, ३०१) च प्रासादपीठादिषु तेषां स्थापनार्चनादिविषयको विचारः कृतः ।

२. मैत्रायण्युपनिषदि (६/२२), महाभारते (१२/२३२/३०, १२ । २७०/१-२), विष्णुपुराणे (६/५/६४) चोपलभ्यतेऽयं श्लोकः । पुराणेष्वन्येषु च बहुषु ग्रन्थेषु परिदृश्यते ।

३. "ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः । परेण ज्योतिषैकत्वं छित्त्वा ग्रन्थीन् प्रपद्यते ।" (पृ० २०३) "स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी" (पृ० २१६) इति वाक्यपदीयस्वोपज्ञटीकायाम् ।

४. 'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् । अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ।" (१/१३४) इत्यत्र वाक्यपदीये यद्यपि त्रिविधैव वाक् प्रपञ्चिता, किन्तु स्वोपज्ञव्याख्यायां "स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी" (पृ०२१६) इत्यत्र परा वागपि परामृष्टैव ।

कथमेतत् सङ्गच्छेत ? इति चेत्, सात्वतसंहितायामेव—"परा वाग्भ्रमरी स्थिता" (२/६७) इत्येवं पराया वाचोऽपि वर्णनदर्शनात् तत् समाधेयम्। तथा च वाग्वेदमण्डलं परावागात्मकं शब्दब्रह्म पश्यन्तीपूर्वकं त्रिधा विभजतीति व्याख्येयम्। बोधमारुतहृत्पूर्वेत्यत्र पूर्वपदेन कण्ठादिस्थानानामध्याहारो विधेयः। तथा च बोध-मारुत-हृदय-कण्ठस्थानेषु तदभिव्यक्तमित्यर्थः करणीयः। एवं चार्थे कृते सति पूर्वापरविरोधः परिहृतो भवति।

शब्दब्रह्मणि निष्णातः कथं नाम[1] परं ब्रह्माधिगच्छतीत्ययं विषयोऽत्र दीक्षाप्रकरणे प्रतिपाद्यते। तथा हि—वेद्यवेदकनिर्मुक्तमच्युतं[2] यत्परं ब्रह्म तत् स्वशक्त्या स्वयमेवाखिलजीवानां मुक्तये शब्दब्रह्मभावेनोदेति। तन्त्रीशब्दवदव्यक्ताक्षरं तच्छब्दब्रह्म अकारादिक्षकारान्तवर्णरूपेण पुनर्व्यक्ततां याति। तदस्याव्यक्ताक्षरस्य शब्दब्रह्मणः प्रथमरूपस्य परिज्ञानं चातुरात्म्यस्य भगवतोऽनुग्रहं विना वेदविदां विदुषामपि दुर्लभम्। पञ्चाध्वकोशमुक्तस्य लब्धशुद्धस्वात्मस्वरूपस्य साधकस्य योऽनुभूतिपदं याति, स धारासन्तानरूपधृग् भिन्नवर्णमयः शब्द एव वर्णाध्वा कथ्यते[3]। सोऽयं वर्णाध्वा प्रभवक्रमेऽकारात् सकारान्तम्, अप्ययक्रमे च हकाराद्, आकारान्तं चातुरात्म्यसमूहरूपेण भावनीयः। तस्यायं क्रमः—

> **प्रभवे द्वादशान्तस्तु हकारश्चतुरात्मनाम् ॥**
> **अकारस्त्वप्यये चैव तुल्यताऽतोऽनयोः स्मृता। (१६/१५४-१५५) इति।**

प्रभवे[4] हकारश्चतुरात्मनां द्वादशान्तः[5], अप्यये च अकारश्चतुरात्मनां द्वादशान्त इत्यन्वयः। द्वादशान्तो धारणाद् द्विषट्कान्त[6] इत्यर्थः। अत्राकारादिहकारान्तेषु एकोनपञ्चाशद्वर्णेष्वकारादि-

---

१. स्वोपज्ञटीकायां भर्तृहरिरपि—"ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः। परेण ज्योतिषैकत्वं छित्त्वा ग्रन्थीन् प्रपद्यते॥" (पृ० २०३) इत्येवं तदेनं विषयं वक्ति।

२. एतच्च प्रकरणं सात्वतायां १६/१२७ श्लोकात् प्रवर्तते।

३. "वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः" इति शीर्षकेऽस्मदीये निबन्धे विषयोऽयं विस्तरेण व्याख्यातोऽवलोकनीयः तन्त्रयात्रा, (पृ० १४-३४)।

४. प्रभवे हकारः, अप्ययेऽकारोऽवशिष्यतेऽनया प्रक्रियया। नानाशाक्तग्रन्थोद्धृतसंकेतपद्धत्याम्—"अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः" इति, "हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः" इति, "चाकारहकारयोः प्रकाशविमर्शात्मकत्वं ख्याप्यते। अत्राप्यकारहकारौ ध्येयौ, तत्रापि च। प्रक्रिया तु भिद्यते।

५. द्वादशान्तपदमस्माभिर्विज्ञानभैरवोपोद्घाते व्याख्यातम् (पृ०२६-२७) अत्र तु हकारस्य अकारस्य च द्वादशान्तत्वं प्रतिपाद्यते। धारणानां द्विषट्कं (द्वादशकम्) अत्र चातेरात्म्यतयं चतुर्धा विभज्य व्याख्यायते। तदन्ते च परवासुदेव एवावाशिष्यत इति द्वादशान्तपदेन तस्यैव परिग्रहो मन्तव्यः।

६. द्विषट्कपदस्य प्रयोगो विज्ञानभैरवादिष्वपि (श्लो० २८) दृश्यते। धारणानां द्विषट्कमनुपदमेवात्र व्याख्यायते। एतदेवोपबृंहितं लक्ष्मीतन्त्रेऽपि (२०/१३-२३)

सकारान्तं वर्णचतुष्टयक्रमेण द्वादश व्यूहा भवन्ति। तदुपर्यवशिष्टस्य हकारस्य द्वादशान्तत्वम्, एवमप्ययक्रमे हकारमारभ्याऽऽकारान्तं व्यूहद्विषट्कानन्तरमवशिष्टस्याऽकारस्य द्वादशान्तत्वमिति भावः।

वर्णमये व्यूहसमूहेऽस्मिन्[1] ज्ञानसमाधिना साधकेन वासुदेवमारभ्य एकैका मूर्तिर्विश्रामः[2], उदयः, व्याप्तिः, व्यक्तिरिति स्वरूपेण भावनीया। विश्रामो नाम वर्णानां सूक्ष्मा (परा) वस्था[3], उदयः पश्यन्त्यवस्था, व्याप्तिर्मध्यमाऽवस्था, व्यक्तिर्वैखर्यवस्था। एवं वासुदेवाद्येकैकमूर्तिरपि विश्रामादिचतुष्टयेन युक्ता ज्ञेया। तत्र विश्रामस्तुरीयव्यूहावस्था। उदयः सुषुप्तिव्यूहावस्था। व्याप्तिः स्वप्नव्यूहावस्था। व्यक्तिर्जाग्रदवस्था। एवं विश्रामादिशब्दवाच्यतुरीयव्यूहावस्थादि-चतुष्टयविशिष्टा वासुदेवादिमूर्तिर्विश्रामादिशब्दवाच्यसूक्ष्मावस्थादिचतुष्टयविशिष्टेष्वकारादि-वर्णेषु दण्डवत् संनिवेशेन संस्थिता। एवं चाकारादिषोडशवर्णानां चतुष्टयचतुष्के जाग्रद्व्यूह-वासुदेवादयश्चतस्रो मूर्तयः, ककारादिषोडशवर्णानां चतुष्टयचतुष्के स्वप्नव्यूहवासुदेवादयश्चतस्रो मूर्तयः, थकारादिसकारान्तषोडशवर्णानां चतुष्टयचतुष्के सुषुप्तिव्यूहमूर्तयः, एतद्द्वादशान्ते हकारे "अभेदेनादिमूर्तेर्वै शुद्धसंविन्मयं महत्" (५/८१) इत्युक्तलक्षणा तुरीयव्यूहमूर्तिरित्यर्थो ज्ञेयः। एवं हकाराद्यकारान्तं प्रातिलोम्येनापि ज्ञेयम्।

एवं वर्णाध्वानं विचार्य प्रकरणमिदमेवमुपसंह्रियते सात्वतायाम्—"द्विषट्कं धारणानां च द्वादशाध्यात्मलक्षणम्। सोपानभूतं यत् क्रान्त्वा द्वादशान्तं विशेत् परम्॥" (१६/१५८) इति। एवं वर्णाध्वनः शब्दब्रह्माभिधस्य स्वरूपपरिचयाद् हृत्पद्मोदरसंस्थितम् "तत्राब्जं चार्कमालम्ब्य परा वाग्भ्रमरी स्थिता" (२/६७) इत्याद्युक्तप्रकारेण हृदयकमलान्तः स्थितं शब्दब्रह्म, तदनु च सुशान्तं भगवत्पदं (परं ब्रह्म) व्यक्तिभावमेतीति सुष्ठूच्यते—"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति"[4] इति।

अन्तर्यजनविधौ वर्णात्मकेन मन्त्रात्मकेन स्वरूपेण भगवानत्रार्च्यते। मन्त्रप्रसादात् साधको भगवतः स्वरूपसाक्षात्काराय ईष्टे। तदेवं चित्तशुद्धेः, जीवात्मनः परमात्मना सह संयोगस्य च प्रमुखं साधनं मन्त्र एवात्र समुपदिश्यत इति सात्वतसंहिता प्राधान्येन मन्त्रयोगस्य प्रतिपादिका। अथापि प्रसङ्गतोऽत्र तदितरस्यापि योगस्य वर्णनं दृश्यते। तदेव संगृह्य साम्प्रतमत्र समुपस्थाप्यते।

---

१. ज्ञानभावना-ब्रह्मसमाधिपदाभ्यां व्याख्यातोऽयं ज्ञानसमाधिः सात्वतायां द्वितीये परिच्छेदे (श्लो० ६०) तद्भाष्ये (पृ०२५, २६) च।

२. विश्राम (विश्रान्ति)—उदय—व्याप्तिशब्दा नित्याषोडशिकार्णवे (४/२) तद्व्याख्ययोश्च ऋजुविमर्शिनी—अर्थरत्नावली (पृ०१६१, २०५, २३१, ३४७) प्रायोऽस्मिन्नेवार्थे प्रयुक्ताः।

३. परावागियमत्र शान्तरूपा सूक्ष्मा चोपवर्णिता (पृ० २७, २४५, २४६, ४०३)।

४. पूर्वतनी पृ० २०/२ संख्याका टिप्पणी द्रष्टव्या। तत्रत्यस्य श्लोकस्य उत्तरार्धोऽयम्।

## सात्वतीयो योगः

"वासुदेवेन सङ्कर्षणायोपदिष्टमेकायनश्रुतेः सूत्ररूपं भगवत्प्राप्त्येकोपायभूताभिगमनोपादानेज्यास्वाध्याययोगरूपकर्मविचारैः[1] परव्यूहविभवरूपब्रह्मविचारैश्च गर्भितं पञ्चविंशतिलक्षणं सात्वतं तन्त्रम्" (पृ० १) इति हि भाष्यकारो ग्रन्थारम्भ एव वदति। सात्वतोऽयं क्रियामार्गः[2] शुद्धमार्ग इत्यपि स प्रतिपादयति (पृ० ३) एतच्च "पाञ्चकालिकधर्मानुष्ठानं भागवतस्य विहितम्" (पृ० १०७) शुद्धक्रियामार्गो हि कर्मज्ञानभक्तिप्रपत्तिनाम्नां चतुर्विधानां भगवत्प्राप्त्युपायानां मध्ये प्रथमः कर्मयोगनाम्नाऽप्यभिधीयते (पृ० २०)। तदेतस्य पञ्चाङ्गस्य शुद्धस्य क्रियामार्गस्य विवरणमत्र षष्ठे परिच्छेदे विस्तरेणोपलभ्यते। योगस्तस्यान्तिममङ्गं भवति। सोऽयं योगोऽत्र "समुत्थायार्धरात्रेऽथ" (६/१९३) इत्यादिना, "ब्रह्म सम्पद्यते तदा" (६/२१४) इत्यन्तेन ग्रन्थेन षष्ठे, "मन्त्रमाराधयेद् येन विधिना'- (१७/१५) इत्यादिना "हृदि विन्यसेत्" (२७/२७) इत्यन्तेन च ग्रन्थेन सप्तदशेऽन्यत्र च यथाप्रसङ्गं वर्णितः।

तद्यथा—अर्धरात्रे समुत्थाय जितनिद्रो जितेन्द्रियः साधकः कमण्डलुस्थितेन वारिणा समाचम्य गुरुं देवं च नमस्कृत्य [3]अजिनासने समुपविश्य मन्त्रचतुष्केण संहारलक्षणं [4]न्यासं कुर्यात्।

---

१. कर्मपञ्चकविचारस्त्रिविधब्रह्मविचारश्च पूर्वमेवात्र विवृतः।

२. "तान् सात्वते क्रियामार्गे मद्वाक्याद याहि योजय।" (१/७) इति सात्वतवचनस्य अद्यावधि निवृत्तिपरायणान् मुनीन् सात्वतशास्त्रोदिते शुद्धे क्रियामार्गे प्रवृत्तिप्रवणे योजयेत्यभिप्रायो ज्ञेयः। सात्वतो हि क्रियामार्गः प्रवृत्तिप्रवणः। "प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः" (३४७/८३) इत्येवं किल महाभारते नारायणीयोपाख्याने प्रतिपाद्यते। क्रियामार्गोऽयं ज्ञानस्य भक्तेश्च साहाय्येन प्रपत्तौ परिणमते, भोगमोक्षयोश्च सम्पादक इति हि एकान्तिनो भागवता मन्यन्ते। यद्यपि "क्रियायोगाः सर्वे संसृतिहेतवः" इति भावार्थदीपिकाकारवंशीधरोद्धृतवचनानुसारं सर्वे क्रियायोगाः संसृतिहेतवो भवन्ति, किन्तु—"तृतीयं ऋषिसर्गं च देवर्षित्वमुपेत्य सः। तन्त्रं सात्वतमाचष्ट नैष्कर्म्यम् कर्मणां यतः ॥" (१/३/८) इति नारदावतारनिरुक्ते भागवतपद्ये कर्मणामपि मोक्षप्रदत्वं प्रदर्श्यते। तथा हि श्रीधरः—"कर्मणामेव मोचकत्वं यतो भवति तदाचष्टेत्यर्थः" इत्येवमिदं वचनं व्याख्याति। "कर्मणां मोक्षसाधनत्वम्" इति पदरत्नावलीकारो विजयध्वजः। "भगवत्सेवापरत्वेन मोचकत्वमेव भवति" इति च गिरिधरो बालप्रबोधिनीकारः। क्रियामार्गोऽयं पातञ्जलयोगसूत्रेऽपि क्रियायोगपदेन व्याख्यातः। "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" (२/१) इति। अयम्—"समाधिभावनार्थः क्लेशतनूकरणार्थश्च" (२/२) भवति। सात्वतप्रदर्शितोऽन्तर्यागः समाधिभावनयैव निष्पद्यत इति खलु विभावनीयम्।

३. 'अजिनासने' इति "चेलाजिनकुशोत्तरं" (६/११) इति श्रीभगवद्गीता वचनं स्मारयति।

४. अङ्गन्यास—करन्यासादय आगमेषु तन्त्रेषु च सर्वत्र व्याख्यायन्ते। सात्वतविवरणावसरे भाष्यकारोऽलशिङ्गभट्टः—"व्यापारो मानसो ह्येष न्यासाख्यो यद्यपि स्मृतः। न बध्नाति स्थितिं सम्यक् तथापि क्रियया विना ॥ कराधीना पुनः सा" (४/४-५), नाडीदशकमाश्रित्य ता एवाङ्गुलयो मताः" (४/२२) इत्येवं पारमेश्वरसंहितावचनमाश्रित्य न्यासविषये वैशिष्ट्यं किञ्चित् ख्यापितवान्। शास्त्रेषु न्यासानां महान् प्रपञ्चो विद्यते। मन्त्राक्षराणां पदानां सम्पूर्णस्य मन्त्रस्य च भावनाख्येन मानसेन व्यापारेण सह कराङ्गुलीनां यथायथं निर्दिष्टेष्वङ्गेषु योजनां विदधता साधकेन किल स्वकीयस्य देहस्य दिव्यत्वमापाद्यते।

आ पादाज्जानुपर्यन्तमनिरुद्धाख्यम्, जानुमण्डलान्नाभ्यन्तं प्रद्युम्नाख्यम्, नाभेरा कर्णदेशं सांकर्षणम्, आ कर्णदेशाद् ब्रह्मरन्ध्रान्तं च वासुदेवाख्यमित्ययं वर्तते मन्त्रचतुष्टयस्य संहारक्रमेण न्यासविधिः। ततोऽभिमतेन पद्मासनादिनाऽऽसीनः स्वात्मनि चातुरात्मीयमभिमानं समाश्रयेत्। वक्षसा समं कायशिरोग्रीवं सन्धाय साधकेन स्वीया विनिमीलितप्राया दृग् नासाग्रगता, जिह्वा-तालुतलस्था, दशनावली सान्तरे, ओष्ठपुटावीषल्लग्नौ च विधेयौ। द्वे बाहुकूर्परे नाभौ, हस्तौ च ऊरुमध्यप्रदेशयोर्वामदक्षिणक्रमेणाधरोत्तरयोगेन स्थापनीयौ। एवं स्वविग्रहं [1]योगपट्टेनाचलं सन्धार्य, अपानदेशं संकोच्य, अवर्णहीनेनालक्ष्यमूर्तिना, [2]हार्णेन तमुपरिष्टाद् विकासयेत्। तेन च विषयान्तर्निविष्टं चित्तं समाहृत्य बुद्धिलीनं कुर्यात्। ततो मन्त्रैः सहात्मानमात्मना समादधीत।

तत्रायं क्रमः—स्वहृदयकमलं तत्तत्पदभेदेन चातुरात्म्यैरधिष्ठितं स्मृत्वा जाग्रत्पदस्थेनानिरुद्धेन सह आत्मानमेकीभूतं ध्यायन् प्रत्यहं तन्मन्त्रं शतवारं जपेत्। एवं तन्मन्त्रजपसामर्थ्यात् तदीयं ज्ञानं माहात्म्यं च स्वस्मिन् भावयेत्। एवमेकं संवत्सरं योगाभ्यासे कृतेऽनिरुद्धतादात्म्य-समन्वितो भवति योगी। तदनन्तरमनिरुद्धं मन्त्रेण सह प्रद्युम्ने संहृत्य प्रद्युम्नोऽहमिति तादात्म्य-भावनां कुर्वन् प्रत्यहं तन्मन्त्रं शतद्वयं जपन् पुनरेकं संवत्सरं नयेत्। एतेन प्रद्युम्नप्रभावो भवति। एवंरीत्या संकर्षणमन्त्रं वासुदेवमन्त्रं स्वप्नव्यूहानिरुद्धादिवासुदेवान्तमन्त्रचतुष्टयं तथा सुषुप्तिव्यूहचतुष्टयं च प्रत्येकमेकैकं संवत्सरं जपवृद्धिक्रमेण तत्तादात्म्यभावनया सहाऽभ्यसन् तत्तन्मत्रं तत्तदुत्तरमन्त्रे उपसंहरन् सुषुप्तिव्यूहदेवमपि पूर्वोक्तलक्षणतुर्यस्थाने स्थिते परात्पर-वासुदेवे उपसंहरन् तत्तादात्म्यभावनया तन्मन्त्रम् ध्यातृध्येयाविभागेन यावत्तन्मयत्वं व्रजेत् तावदन्तं जपन् ततो[3] जपक्रियां त्यजेत्। एवमभ्यासाद् भगवद्योगी वेद्यवेदकभावरहिते

---

१. योगस्य पट्टं वसनविशेषः, योगार्थं पट्टमिति वा। यद्वस्त्रेण पृष्ठजानुबन्धनं भवति तत्। तल्लक्षणं यथा—"पृष्ठजान्वोः समायोगे वस्त्रं वलयवद् दृढम्। परिवेष्टय यदूर्ध्वचक्षुस्तिष्ठेतद् योगपट्टकम्॥" इति पाद्मे कार्तिकमाहात्म्ये द्वितीयेऽध्याये (शब्द०, भा० ४, पृ० ५६) योगाभ्यासार्थं पट्टम्। योगिधार्ये पट्टसूत्रभेदे। योगपदकमन्यत्र—"त्रिविधं योगपदकमाद्यं व्याघ्राजिनोद्भवम्। द्वितीयं मृगचर्माढ्यं तृतीयं तन्तुनिर्मितम्॥ चतुर्मात्रं प्रविस्तारं दैर्ध्येण यज्ञसूत्रवत्।" सिद्धान्तशेखरः। चतुर्मात्रं चतुरङ्गुलमात्रम्। वीरमि० (वाचस्पत्ये, भा० ६, पृ० ४७८०)।

२. "मध्यजिह्वे स्फारितास्ये मध्ये निक्षिप्य चेतनाम्। होच्चारं मनसा कुर्वंस्ततः शान्ते प्रलीयते।" (श्लो०८०) इति विज्ञानभैरवश्लोकेऽप्यनच्कहकारमात्रोच्चारणमुपदिश्यते। अस्य स्वरूपादिकं तत्रैव व्याख्यानेऽस्माभिः कृते तदुपोद्घाते (पृ० २७-३०) च द्रष्टव्यम्।

३. जयाख्यायां (३३/११) योगाख्यानपटले, मृगेन्द्रादिषु च शैवागमेषु योगपादे (श्लो० ३) जपो योगाङ्ग-तया निर्दिश्यते। वाचिकः, उपांशुः, मानस इति त्रिविध एव जपः सर्वत्र प्रतिपाद्यते। अत्र तु—"वाचिकं क्षुद्रकमार्थमुपांशुः सिद्धिकर्मणि। मानसो मोक्षलक्ष्मीदो ध्यानात्मा सर्वसिद्धिकृत्।" (३९/३५) इत्येवं लक्ष्मीतन्त्रप्रामाण्येन ध्यानात्मा चतुर्थः प्रकारोऽपि भाष्यकारेण जपस्य प्रदर्शितः (पृ० ८५), तस्य योगाङ्गता च निदर्शिता (पृ० ११५)। जयाख्यायां जयविधानाख्ये चतुर्दशे पटलेऽपि सोऽयं विषयो विस्तरेण सभेदोपभेदं भणितः।

समाधौ यदा स्थितिं लभते, तदा ब्रह्म सम्पद्यते । ब्रह्मैव[1] भवतीत्यर्थः । परमसाम्यं भजतीति यावत् । तदुक्तम्—"अनेन क्रमयोगेन जपवृद्धत्राऽन्वितेन तु ॥ निखिलं चाप्यधीकुर्यान्मन्त्रवृन्दं पुरोदितम् । यावदाभाति भगवान् स्थाने पूर्वोक्तलक्षणे ॥ प्रलीनमूर्तिरमलो ह्यनन्तस्तेजसां-निधिः । चिदानन्दघनः शान्तो ह्यनौपम्यो ह्यनाकुलः ॥ समाधायात्मनात्मानं तत्र त्यक्त्वा जपक्रियाम् । ध्यातृध्येयाविभागेन यावत् तन्मयतां व्रजेत् ॥ यदा संवेद्यनिर्मुक्ते[2] समाधौ लभते स्थितिम् । अभ्यासाद् भगवद्योगी ब्रह्म सम्पद्यते तदा" (६/२१०-२१४) इति ।

मन्त्रात्मकस्य भगवत आराधनं चैवं विधीयते—स्नातोबद्धकचो मौनी शुद्धवासोऽर्घ्यपुष्पधृक् साधक आसने उपविश्य [3]दहनाप्यायनात्मिकाभ्यां [4]धारणाभ्यां-प्राणायामात्मिका भूतशुद्धिं कुर्यात् । तद्यथा केवलेन भावनासहितेन वा मन्त्रेण नाभिदेशस्थितं देवं ध्यात्वा कल्मषं संगृह्य वायुमार्गेण प्रथमप्राणायामान्त्यरेचकवायुमार्गेण निस्सृतं तं द्वादशान्तावधौ क्षिपेत् । निरस्तपापं मन्त्रेशं वातचक्रसमन्वितं द्वितीयप्राणायामपूरकवायुसहितं नासाग्रेण देहे सम्पूरयेत् । गतिरुद्धेन वायुना तृतीयप्राणायामकुम्भकेन च तं मन्त्रेशं हृदयस्थं ध्यायेत् । चित्तोपशमनार्थं वायुजयाय चायं प्राणायामोऽभ्यस्यते । अथ बहिः शनैः शनैः केवलं मारुतं क्षिपेत् । अन्त्यं रेचकं विनाऽन्येषा-मुत्तरोत्तरं यथाशक्ति कालह्रासं नित्यमेव समाचरेत् । अथ सप्तहाटकसन्निभं सहस्ररश्मि-संकाशं मन्त्रेशं द्वादशान्ते वृत्तमण्डलमध्यगं स्मृत्वा पञ्चतन्मात्रैर्मुक्तं स्वकं विग्रहं निर्दहेत्, [5]दक्षिणाङ्घ्रेरङ्गुष्ठप्रान्तप्रदेशे युगान्तहुतभुक्स्वरूपं ज्वालाशतसमावृतं[6] शिखाक्षरं ध्यात्वा

---

१. अस्यां स्पष्टोक्तौ सत्यामपि, "मुद्रां बद्ध्वा स्मरेद् ध्यानं देवोऽहमिति भावयेत्" (१७/३६) इति सात्वतव-चनोपबृंहके—"अहं स भगवान् विष्णुरहं नारायणो हरिः । वासुदेवो ह्यहं व्यापी भूतावासो निरञ्जनः ॥ एवं रूपमहङ्कारमासाद्य सुदृढं मुने ।" (११/४१-४२) इति जयाख्यावचने जागरूके सत्यपि, भाष्यकारः—"नैतावता जीवात्मपरमात्मनोः स्वरूपैक्यं शङ्कनीयम्" (पृ० २९६) इति वदति, पाञ्चरात्ररक्षाप्रामाण्येन च तत्समर्थयति । तदेतच्चिन्त्यम्, "शान्तात्मन्येकतां गतम्" (१९/११२) इत्यत्र तयोरेकत्वस्य स्पष्टं प्रतिपादनात् । सात्वतसंहिताया उपोद्घाते भोगमोक्षप्रकरणेऽस्य विस्तरो द्रष्टव्यः ।

२ संवेद्यनिर्मुक्तः समाधिरयं सात्वतायां षडध्वप्रकरणेऽपि (१९/११३) स्मर्यते । स च योगसूत्रप्रतिपादि-तादसम्प्रज्ञातसमाधेरभिन्न इति विभावनीयम् ।

३. तन्त्रान्तरेषु भूतशुद्धिप्रकरणे प्राणायामसाहाय्येन शोषदाहाप्याया उपदिश्यन्ते । अत्र तु दाहाप्यायात्मकं धारणाद्वयमेव वर्ण्यते (पृ० ३५६) । एवं चात्र शोषस्य दाह एवान्तर्भावो मन्तव्यः ।

४. धारणाद्वयमत्र वर्णितम् । धारणानां द्विषट्कं च शब्दब्रह्मप्रकरणे निर्दिष्टम् । "पञ्चभिर्धारणाभिर्वा द्वाभ्यां वा शोधयेत्तनुम्" (३/१४३), "धारणापञ्चकं चैव संक्षिप्तं विहितं द्वयम्" (३/२२३) इत्येवं च धारणा-पञ्चकं पारमेश्वरे स्मर्यते । धारणाविषयकः प्रपञ्चः पारमेश्वरे तृतीयाध्याये, जयाख्यायां च समाधिख्यापने दशमे पटले द्रष्टव्यः ।

५. एष विषयः—"कालाग्निना कालपदादुत्थितेन स्वकं पुरम् । प्लुष्टं विचिन्तयेदन्ते शान्ताभासस्तदा भवेत् ।" (श्लो० ५१) इति विज्ञानभैरवेऽपि वर्ण्यते । कालपदाद् दक्षिणपादाङ्गुष्ठात्, स्वकं पुरम् आत्मीयं पाञ्चभौतिकं शरीरमित्यर्थः ।

३. शिखाक्षरं वह्निबीजमित्यर्थः ।

तेन समन्ततः प्रज्वलन्तं स्वविग्रहं ध्यायेदिति भावः। तदनु देहजां ज्वालां मन्त्रनाथे लयं गतां भावयेत्। दिव्यं प्रशान्ताकारं तं मन्त्रनाथं च चेतसाऽधिष्ठाय स्वमन्त्रात् तन्मन्त्रप्रतिपाद्य-[1] द्वादशान्तस्थितभगवतः सकाशान्निस्सृतेनामृतौघेन स्वकं विग्रहमासिञ्चेत्। ततः समन्त्रं तद्बिम्बं द्वादशाङ्गुलोपरि वृत्तमण्डलमध्यस्थं हृदि विन्यसेदिति।

अयं परमात्मा ईदृशः, अयं जीवात्मा ईदृश इत्येवं तयोः सम्बन्धानुसन्धानमेव योग इति शाण्डिल्यः। वश्यैरिन्द्रियैः सम्पन्ना बुद्धेर्ब्रह्मणि संस्थितिरपि योगपदेनाभिधीयते। पराशर-मतेन आत्मप्रयत्नसापेक्षाया विशिष्टाया मनोगतेर्ब्रह्मणि संयोगो योग इत्यभिधीयते। सर्वभाव-विनिर्मुक्तस्य क्षेत्रज्ञस्य[2] ब्रह्मणि न्यास एव ध्यानं योगश्चेति दक्षः। मनो बाह्यवृत्तिरहितं कृत्वा क्षेत्रज्ञस्य ब्रह्मणि न्यास एव योग इति च याज्ञवल्क्यः। अत्र शाण्डिल्यस्य द्वितीयं पराशरीयं च लक्षणमेकविधम्। एवमेव दक्षस्य याज्ञवल्क्यस्य च लक्षणं समानमिति त्रिविधमत्र योगस्य लक्षणं प्रतिपादितं भवति—जीवात्मपरमात्मनोः सम्बन्धानुसन्धानं प्रथमम्, शुद्धस्य मनसो ब्रह्मणि संयोगात्मकं द्वितीयं, बाह्यवृत्तिरहितस्य क्षेत्रज्ञस्य ब्रह्मणि योजनं च तृतीयमिति। अन्ततः परिष्कृतचित्तवृत्तेर्जीवात्मनः परमात्मनि योजनमित्येकमेव सर्वलक्षणसमुच्चायकं योगस्य लक्षणं निष्पद्यते।

परस्य भगवतोऽर्चनेऽष्टाङ्गयोगयुक्तानां हृद्यागनिरतात्मनां योगिनामेवाधिकारोऽत्र सात्वतायां (२।७-८) निर्दिष्टः। तेन संहितेयमष्टाङ्गयोगस्य समर्थिकेति ज्ञायते। कानि तदङ्गानीति तु नात्र दृश्यते। जयाख्यायां तु योगाख्याने त्रयस्त्रिंशे पटले प्रणायाम-प्रत्याहार-ध्यान-धारणा-जप-योग-ऊह्-समाधिभेदैरष्टाङ्गो योगो वर्णितः। एष च पातञ्जलादष्टाङ्गयोगाद् भिद्यते। विष्णु-संहितायां च प्राणायामोऽत्र पूर्वं तु, प्रत्याहारोऽथ धारणा। ततस्तर्कः समाधिश्च ध्यानं चाङ्गानि षट् क्रमात्॥" (३०।५७-५८) इत्येवं षडङ्गो योगः प्रतिपाद्यते। अष्टाङ्गस्य षडङ्गस्य चास्यागमिकस्य तान्त्रिकस्य च योगस्य विवरणं शाक्तागममीमांसायां योगप्रकरणे समुपस्थाप-यिष्यते।

## उपसंहारः

एवमत्र त्रिविधेषु वैष्णवागमेषु वैखानसभागवतौ संक्षेपेण, पाञ्चरात्रागमस्तद्दर्शनयोगौ च विस्तरेण व्याख्यायन्त। भारतीये वाङ्मये उपनिषदः, ब्रह्मसूत्राणि, भगवद्गीता चेति त्रयं प्रस्थानत्रयीति नाम्ना परिचीयते। प्रस्थानत्रय्यां श्रौती, दार्शनिकी स्मार्ती च धाराः समन्वय-मुखेनैकाकारतामापादिताः। तत्र ब्रह्मसूत्रं श्रुतिषु भगवद्गीता च कृतान्तपञ्चकेषु

---

१. द्वादशान्ते स्वमूर्ध्नो द्वादशाङ्गुलोपरीत्यर्थ इति भाष्यकारः (पृ० २६४) द्वादशान्तोऽयं द्विषट्कपदेनाप्यत्र (१८/५४) निर्दिश्यते "द्विषट्कं धारणानां च" (१६/१५८) इत्यत्र तु द्विषट्कशब्दो द्वादशसंख्यापरामर्शकः।

२. क्षेत्रक्षेत्रज्ञयोः स्वरूपं भगवद्गीतायां त्रयोदशाध्याये निर्दिष्टमत्र स्वीकर्तव्यम्, न तु सात्वतायां नवमे परिच्छेदे (श्लो० ३०) पिण्डबीजादिप्रकरणे प्रोक्तम्।

समन्वयमादधाति । वल्लभाचार्यो भागवतं चतुर्थप्रस्थानत्वेनाङ्गीकरोति । अन्ये वैष्णवाचार्याः पाञ्चरात्रागमानामव्याहतं प्रामाण्यमूरीकुर्वन्ति । तदेतत् पाञ्चरात्रोपजीव्यत्वमेव सर्वाणि वैष्णवदर्शनानि परस्परमनुबध्नाति । शतपथब्राह्मणीये पाञ्चरात्रसत्रे, छान्दोग्योपनिषदि, भगवद्गीतासु च पाञ्चरात्रागमस्य प्राचीनं स्वरूपमुपलभ्यते। भगवद्गीता पाञ्चरात्रागमग्रन्थ इति केचन वदन्ति । न केवलं भगवद्गीता, सम्पूर्णं महाभारतं कृतान्तपञ्चकसमन्वयमुखेन प्रवर्तत इति तु सत्यम् । शान्तिपर्वणि विद्यमानं नारायणीयोपाख्यानं स्पष्टं पाञ्चरात्रमतमुपजीवति । साम्प्रतमुपलब्धे पाञ्चरात्रागमसाहित्ये प्राचीनतममेतदिति वक्तुं शक्यते । महाभारते भीष्मपर्वणि (६६।३६-४०) वर्तते सङ्कर्षणोपदिष्टस्य सात्वतविधेरुल्लेखः । तत्रैव शान्तिपर्वणि (२१८।११-१२) पञ्चशिख आसुरिशिष्यः पञ्चरात्रविशारद इत्यनेन विशेषणेन भूषितः । स्पन्दप्रदीपिकायां च पाञ्चरात्रश्रुति-पाञ्चरात्रोपनिषदः संहिताग्रन्थाः स्वतन्त्रा निबन्धग्रन्थाश्च स्मर्यन्ते । प्रस्थानत्रयीवत् सम्पूर्णमेतदागमवाङ्मयमुपजीव्यं वैष्णवाचार्याणाम्, दाक्षिणात्यानां वैष्णवभक्तानामालवाराणां च । अत एव वर्तते विभिन्नेषु वैष्णवदर्शनेषु महत्साम्यम् । ब्रह्मणः सगुणता साकारता च, जीवाणुत्ववादः, मुक्तिसाधनेषु भक्तेः प्राधान्यम्—इत्येते विषयाः सर्वत्र समानाः श्रूयन्ते । न च कोऽपि शाङ्करसिद्धान्तमनुमन्यते । प्रस्थानत्रयीप्रामाण्येन व्याख्यातस्य ब्रह्मसूत्रस्य शाङ्करभाष्येऽन्येषु वैष्णवाचार्यप्रणीतेषु भाष्येषु च विभिन्नेषु विषयेषु स्पष्टो मतभेदो दरीदृश्यते । दक्षिणे भारते वर्तते साम्प्रतमपि वेदवत् प्रामाण्यं पाञ्चरात्रागमानाम् । वेदैः साकं द्रविडवेदानां विद्वांसश्चात्र बहु मान्यन्ते । उत्तरे तु भारते तदध्ययनमवसितप्रायम् । न च वैष्णववेदान्तानां भक्तिशास्त्रस्य चाध्ययनं तेन विना सम्यग् भवति, न च भारतीयासु प्रादेशिकभाषासु निबद्धस्य वैष्णवभक्तिसाहित्यस्यानुस्यूतता सम्यग् ज्ञातुम् शक्यते, न चाहिंसाधर्मस्य सार्वत्रिकः प्रचारः सम्यग् व्याख्यातुं शक्यते । अत्रावधातव्यमुत्तरभारतीयैर्मनीषिभिरित्येवोक्त्वा विरम्यते ।



# शैवागममीमांसा

रघुनाथौ नमस्कृत्य गोपीनाथौ च मे गुरू ।
नर्मदां मातरं नत्वा शैवागममुपास्महे ।।

कृष्णशुक्लयजुर्वेदयोः [1]शतरुद्रियाध्याये वर्ण्यते रुद्रस्य महान् महिमा। अत्र रुद्रः स्तेनानां तस्कराणां शूद्राणामतिशूद्राणां चाप्याराध्यतया वर्णितः। [2]कृष्णयजुर्वेदसंहितारण्यकयो रुद्रस्याघोरवामदेवादिपञ्चस्वरूपाणां भस्मोद्धूलनादिविधेश्च ज्ञायते तादृगेव स्वरूपं यादृशं हि प्रतिपादितं पाशुपतसूत्रकारेण। [3]बौद्धग्रन्थेष्वपि तदेतस्य मतस्य स्थितिसूचकं प्रमाणमुपलभामहे। उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः।।" (१२।३४९।६७) इति महाभारतवचनेन श्रीकण्ठः पाशुपतमतस्याद्यः प्रवक्तेति ज्ञायते। [4]भूखननोपलब्धस्य प्रागैतिहासिकसंस्कृतिसूचकस्य वस्तुजातस्योपरि दृष्टिनिक्षेपे कृते एवं निश्चयो जायते यच्छैवागमपरम्परायाः सत्ताऽस्मात् कालात् पञ्चसहस्रवर्षपूर्वं 'हरप्पा-मोहेंजोदड़ो' संस्कृतीनां समये आसीदिति।

## द्विविधः शिवागमः

शिवपुराणे [5]द्विविधः शिवागमः प्रदर्शितः—श्रौतः स्वतन्त्रश्चेति। तत्र स्वतन्त्रः शिवागमो दशधाऽष्टादशधा [6]च विभक्तः कामिकादिसमाख्याभिः परिचीयते। स्वतन्त्रोऽयं शिवागमः सिद्धान्तपदवाच्यः। "सिद्धान्तशब्दश्च पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः" इति रत्नत्रयोल्लेखिन्यां (पृ० ५) घोरशिवाचार्यैः, "प्रायश्च

---

१. तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चम प्रपाठकः, माध्यन्दिनसंहितायां षोडशाध्यायश्च।

२. मैत्रायणीसंहितायां २/९/१; २/९/१०; तैत्तिरीयारण्यके (०/४३-४७ च द्रष्टव्यम्।

३. धम्मपदे १४१ गाथा द्रष्टव्या।

४. डॉ० कान्तिचन्द्रपाण्डेयकृते शैवदर्शनबिन्दौ परिवर्धिते संस्करणे वाराणसेयसंस्कृतविश्वविद्यालप्रकाशिते (पृ० २) द्रष्टव्यम्।

५. वायुसंहितायाः पूर्वखण्डस्य द्वात्रिंशत्तमोऽध्यायो द्रष्टव्यः (श्लो० ११-१७)।

६. दशाष्टादशभेदभिन्नानां शैवरौद्रागमानां तदुपागमानां च २०७ संख्याकानां नामानि पाठभेदपुरस्सरं तालिकामुखेन स्थापितानि पाण्डिचेरीतः प्रकाशिते रौरवागमप्रथमभागे द्रष्टव्यानि।

सिद्धान्तप्रियो लोकः" (स्वच्छन्दो० २/२५), "शैवशब्देन अनुत्तीर्णपदप्रापकं करणादिसिद्धान्त-शास्त्रमुच्यते" (स्वच्छन्दो०, ११/७४) इति च क्षेमराजो निरुक्ति। श्रौतस्तु शतकोटिप्रविस्तरः, यत्र पाशुपतं व्रतं ज्ञानं चोच्यते। क्रियातपोजपध्यानदानात्मकानि पञ्चपर्वाणि भवन्ति तत्र। तदिदं शास्त्रं चत्वार ऋषयः संक्षिप्योपदिशन्ति रुरु-दधीचि-अगस्त्य-उपमन्युनामानः। धौम्याग्रजेनोपमन्युना श्रीकृष्णायोपदिष्टं पाशुपतं ज्ञानं महाभारते[1] वायुसंहिताया उत्तरभागे च संगृहीतो विद्यते।

पाशुपतशास्त्रस्य न कोऽप्यागमग्रन्थः साम्प्रतमुपलभ्यते। किन्तु विशुद्धमुनिकृते आत्मसमर्पणे श्वेतादिलकुलीशान्तानामष्टाविंशतिपाशुपतयोगाचार्याणां नामावली दृश्यते। अष्टाविंशतियोगाचार्याणां प्रत्येकं चत्वारः शिष्याः श्रूयन्ते। संहत्य द्वादशोत्तरशतं (११२) शिष्या भवन्ति। सर्वेषामेषां नामानि शिवपुराणे स्थलद्वये दृश्यन्ते। एका नामावली तृतीयस्याः शतरुद्रसंहितायाश्चतुर्थे पञ्चमे चाध्याये अपरा च सप्तम्या वायुसंहिताया उत्तरखण्डस्य नवमेऽध्याये वर्तते। तत्र प्रथमा वायुपुराणीयत्रयोविंशतितमाध्यायानुसारिणी, अपरा च लिङ्गपुराणीयसप्तमाध्यायस्थां नामावलीमनुसरति। योगाचार्यनामावली कूर्मपुराणस्य त्रिपञ्चाशत्तमेऽध्याये, स्कन्दपुराणस्य माहेश्वरखण्डान्तर्गत-कौमारिकाखण्डस्य चत्वारिंशत्तमेऽध्यायेऽपि च दृश्यते। अत्र प्रथमेऽन्तिमे च नामनि नास्ति विसंवादः। अन्यत्रत्वेष दृश्यते। अत्रावधातव्यं मनीषिभिः। अत्र कपिल-आसुरि-पञ्चशिख-पराशर-बृहस्पति-कुणि-श्वेतकेतु-शालिहोत्र-अग्निवेश-अक्षपाद-कणादप्रभृतीनि नामानि विशेषतोऽवधेयानि सन्ति।

श्रीकण्ठप्रवर्तितस्य श्रौतस्यास्य पाशुपतमतस्य सिद्धान्ताः स्वतन्त्रात् सिद्धान्ताख्यात् शिवागमात् कियतांऽशेन भिन्ना आसन्नित्यस्य परिचयः साम्प्रतं दुःशक इव प्रतीयते। यतो हि लकुलीशात् पूर्ववर्तिनोऽस्य महाभारतस्मृत-श्रीकण्ठीयपाशुपतमतस्य ग्रन्थादिकं साम्प्रतं नोपलभ्यते। कृष्णशुक्लयजुर्वेदयोः सहिता ब्राह्मणारण्यकेषु रामायणमहाभारतयोः, पुराणस्मृतिग्रन्थेषु, योगग्रन्थेषु च प्राचीनेष्ववचीनेषु च तत्र तत्र प्राचीनस्य पाशुपतमतस्य योगस्य च चर्चा विद्यते। साम्प्रतमुपलभ्यमानेषु शैवशाक्तागमतन्त्रग्रन्थेषु पूर्वपक्षतयोपन्यस्तानां पाशुपतदर्शनसिद्धान्तानां केषाञ्चन परिचयमुपलभामहे। तदाधारेणास्य मतस्य प्राचीनं स्वरूपं ज्ञातुं शक्येत।

## लकुलीशपाशुपतमतम्

ब्रह्मणो मानसः पुत्रोऽत्रिः, तस्य पुत्र आत्रेयः, आत्रेयादग्निशर्मा, अग्निशर्मसुतः सोमशर्मा, तस्य पुत्रो विश्वरूपः, विश्वरूपाच्च लकुलीशो जात इति कारवणमाहात्म्ये वर्ण्यते। लकुलीश एव तन्नाम्ना प्रसिद्धस्य पाशुपतमतस्य प्रवर्तको मन्तव्यः। लकुलीशादिविद्यागुर्वन्ताना-

---

१. अनुशासनपर्वणि (१४/६४-३७७), शिवपुराणे च वायुसंहिताया उत्तरभागे सम्पूर्णे विषयोऽयं विस्तरेणोपदिष्टः।

मष्टादशगुरूणां नामावली गुणरत्नकृतषड्दर्शनसमुच्चयटीकायामथ च राजशेखरसूरिकृते षड्दर्शनसमुच्चये[2] दृश्यते। तद्यथा—लकुलीशः, कौशिकः, गार्ग्यः, मैत्र्यः, कौरुषः, ईशानः, पारगार्ग्यः, कपिलाण्डः, मनुष्यकः, (अपर)कुशिकः, अत्रिः, पिङ्गलः (पिङ्गलाक्षः), पुष्पकः, बृहदार्यः (बृहदाचार्यः), अगस्तिः, सन्तानः, राशिकरः, विद्यागुरुश्चेति। अत्र प्रथमो लकुलीशः पञ्चाध्यायात्मकस्य पाशुपतसूत्रस्य रचयिता, सप्तदशो राशिकरश्च पञ्चाध्यायी-भाष्यस्य। अन्येषामाचार्याणां कापि कृतिः साम्प्रतं नोपलभ्यते। विद्याधिपतेरनुभवस्तोत्रस्य। प्रमाणस्तुतेश्च केचन श्लोका विभिन्नेषु ग्रन्थेषु समुपलभ्यन्ते। विद्याधिपतिरेष विद्यागुरुरेव स्यात्।

बटोदर(बड़ौदा) नगरसमीपवर्तिनि कायावरोहण-(कारवण)-नाम्नि तीर्थे विश्वरूपस्य जायायां लकुलीशस्य जन्म ईशवीयद्वितीयशताब्द्यां समभूदित्यैतिहासिकाः शिलाशासनादि-प्रामाण्येन साधयन्ति। कौशिक-(कुशिक)गर्ग-मित्र-कौरुष्याभिधास्तस्य चत्वारः शिष्या आसन्नित्यपि शिलाशासनादिना ज्ञायते। लकुलीशप्रणीतं पाशुपतसूत्रं कौण्डिन्यापरपर्यायराशी-करकृतं तद्भाष्यं च साम्प्रतं मुद्रितं समुपलभ्यते। विशुद्धमुनिकृते यमप्रकरणात्मसमर्पणे अज्ञातकर्तृकः कारणपदार्थः, हरदत्ताचार्यकृता गणकारिका, भासर्वज्ञकृता तट्टीका च—इत्येते सर्वे ग्रन्थाः कारवणमाहात्म्यं च वटोदरस्थगायकवाड़शोधसंस्थानतः प्रकाशिते गणकारिकासंस्करणे समावेशमलभन्त। सत्कार्यविचारष्टीकान्तरं चेति द्वौ ग्रन्थौ स्वकीयौ भासर्वज्ञेन गणकारिकाटी-कायां स्मृतौ। भासर्वज्ञः प्रसिद्धो नैयायिको न्यायसारग्रन्थस्य न्यायभूषणाख्यायास्तट्टीकायाश्च कर्ता विद्यते।[3] स एवास्या गणकारिकाव्याख्याया रचयिता मन्तव्यः। तेन गणकारिकाटीकायां संस्कार-कारिका कश्चन टीकाकारश्च स्मर्यते। एतेन ज्ञायते यदन्यैरपि गणकारिकेयं भासर्वज्ञात् पूर्वमपि व्याख्यातेति। अज्ञातकर्तृकः कारणपदार्थः, पञ्चार्थभाष्यदीपिका, आदर्शकारः—इत्येते ग्रन्थाः कानिचन वचनानि च माधवादिग्रन्थेषु प्रमाणत्वेनोद्ध्रियन्ते तेनानुमीयते यदन्येऽपि बहवो ग्रन्था एतद्दर्शनप्रतिपादकाः पूर्वमासन्निति। सर्वेषामेतेषां ग्रन्थग्रन्थकाराणां समयदेशादिनिर्णयो डॉ० कान्तिचन्द्रपाण्डेयविरचिते शैवदर्शनबिन्दुसमाख्ये (पृ० २७-३३) ग्रन्थे द्रष्टव्यः। "शेषमाकर एवावगन्तव्यम्" इति सर्वदर्शनसंग्रहवचने माधवेनाकरनामा कश्चन ग्रन्थः स्मृत इति वचनं तु तत्रत्यं चिन्त्यम्, आकरपदस्य सामान्यतस्तत्तच्छास्त्रीयप्रमाणभूतग्रन्थनिर्देशकत्वात्। क्षेमराजेन स्वच्छन्दोद्योते (११४३) पञ्चार्थप्रमाणवचनानि स्मर्यन्ते। कार्यकारणादिपञ्चार्थानां प्रतिपादकं शास्त्रं पाशुपतमिति नूनमेष ग्रन्थः पाशुपतमतस्यैव स्यात्।

एवं च ईशवीयद्वितीयशतकादारभ्य यदा लकुलीशः समभूत्, चतुर्दशशतकपर्यन्तं यदाऽचल-

---

१. गणकारिकापरिशिष्टे उभयोरपि ग्रन्थयोः प्रासङ्गिका अंशाः संगृहीता इति तत्र (पृ० २६, ३५) द्रष्टव्या नामावली।

२. लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घाते विषयोऽयं विस्तरेण व्याख्यास्यते।

३. गणकारिकाकर्तृविषये तद्व्याख्यातृविषये च मतभेदः शैवदर्शनबिन्दौ (पृ० ३१), डॉ० सुरेन्द्रनाथदास-गुप्तकृते 'हिस्ट्री आफ इण्डियन फिलासफी" (भा० ५, पृ० ११-१२) इत्याख्ये ग्रन्थे च द्रष्टव्यः।

गढशिलालेखः समुत्कीर्णः, अस्य मतस्य प्रचारो गुर्जरे मथुरायां दक्षिणभारते चाविच्छिन्न आसीदित्यत्र नास्ति सन्देहः। साम्प्रतमपि नाथद्वारा-उदयपुरमध्यवर्तिनि 'एकलिङ्गजी' इत्याख्ये पावने तीर्थे भगवान् पञ्चवक्त्रः पशुपतिनाथः पूज्यते। पश्चिमोदधितटस्थितस्य गोकर्णतीर्थस्य पाशुपतव्रतिनां वंशजा एव साम्प्रतं नेपालदेशे काष्ठमण्डपवसतेः पशुपतिनाथस्य समर्चका भवन्ति।

## पञ्च स्रोतांसि

पशुपतेः शिवस्य पञ्चवक्त्रेभ्यः प्रसृतैः स्रोतोभिः सिद्धान्तगारुड-भूत-दक्ष वामाख्यानि शास्त्राणि प्रवृत्तानि। तदेतेषां चतुष्षष्ट्युत्तरशतसंख्याकानां शैवतन्त्राणां नामावली वैरोचनकृते प्रतिष्ठा-लक्षणसारसमुच्चयाख्ये[1] ग्रन्थे दृश्यते। तत्रोर्ध्वमुखतो विनिःसृतानि कामिकादीनि दश शैवतन्त्राणि, विजयादीन्यष्टादश च रौद्रतन्त्राणि। एतेषु शिवागमा द्वैतवादिनः, रुद्रागमाश्च द्वैताद्वैतवादिन[2] इति जयरथः श्रीकण्ठीप्रामाण्येनाह। डॉ० कान्तिचन्द्रपाण्डेयमहोदयेन तु सिद्धान्त-शैवसंज्ञया प्रथितमिदं सम्पूर्णं वाङ्मयं द्वैतदर्शनपरतयैव, लकुलीशपाशुपतदर्शनं च द्वैताद्वैत-परकतया व्याख्यातम्। अष्टाविंशतिसंख्यकानां सिद्धान्तशैवागमानामुपागमाः सप्तोत्तरद्विशत-संख्याकाः (२०७)किरणकारणसुप्रभेदाजितादिष्वागमेषु वर्ण्यन्ते। गारुडतन्त्राणि विषनिर्हरणप्रयो-जनान्यष्टाविंशतिविधानि, भूतग्रहनिवारकभूततन्त्राणि विंशतिप्रकाराणि, शत्रुक्षयकरभैरव-संज्ञकानि दक्षतन्त्राणि चतुष्षष्टिभेदवन्ति, सर्ववशीकरणानि च वामतन्त्राणि चतुर्विंशतिसंख्याकानि सन्ति। आहत्य शिवस्य पञ्चवक्त्रेभ्यो विनिःसृतानि चतुष्षष्ट्युत्तरं शतं शैवतन्त्राणीमानि भवन्ति। उपागमानामत्र समावेशो नास्ति।

## चतुर्विधाः शैवाः

[3]चतुर्विधाः शैवाः शिवपुराणे, वामनपुराणे, षड्दर्शनसमुच्चयटीकायां गुणरत्नकृतायां ब्रह्मसूत्रशाङ्करभाष्यभामत्याम्, ब्रह्मसूत्रभास्करभाष्ये, रामानुजीये श्रीभाष्ये, यामुनाचार्यकृते

---

१. नेपालराजधानीकाष्ठमण्डपनगरतो मुद्रितेऽस्मिन् ग्रन्थे प्रथमे भागे (२/११२-१२८) एषा नामावली द्रष्टव्या। तन्त्रयात्रायां संगृहीते "सम्मोहनतन्त्रं शक्तिसंगमतन्त्रादभिन्नम्" इत्यस्मिन् निबन्धेऽप्येते श्लोकाः संगृहीताः।

२. "दशाष्टादशवस्वष्टभिन्नं यच्छासनं विभोः" (१/१८) इति तन्त्रालोकवचनव्याख्यायां जयरथः—"भेद-प्रधाना दश शिवभेदाः" (पृ० ३७) इति, अष्टादश भेदाभेदप्रधाना रुद्रभेदाः" (पृ० ३९) इति चोक्त्वा श्रीकण्ठीपठितानि तेषां नामान्याह (पृ० ४०)।

३. तन्त्रयात्रायां मुद्रिते "शिवपुराणीयं दर्शनम्" इत्याख्ये, "कालवदनः कालदमनो वा" इति शीर्षके चास्मा-कीने निबन्धे विवृतोऽयं विषयः। डॉ० वी० एस० पाठकनिर्मिते "हिस्ट्री आफ शैव कल्ट इन नोर्दर्न इण्डिया" इत्याख्ये ग्रन्थे (पृ० ३-४), डॉ० डेविड एन० लोरेंजननिर्मिते "दि कापालिक्स एण्ड काला-मुख्स" इति नामधेये च ग्रन्थे (पृ० १-१२) विस्तरेणायं विषयो विवृतोऽवलोकनीयः।

आगमप्रामाण्ये चेत्यादिषु ग्रन्थेषु वर्ण्यन्ते। यद्यपि कापालिका एव महाव्रतधरा भवन्ति, तथापि शिवपुराणे कालामुखा अत्र महाव्रतधरा उक्ता इति मन्तव्यम् । शैवपरिभाषायामपि मोक्षस्वरूपनिरूपणप्रसङ्गे कालामुखा एवानेन शब्देन बोध्यन्ते। भामत्यां वर्णिताः कारुणिक-सिद्धान्तिनः, भास्करवर्णिताः काठकसिद्धान्तिनश्चापि कालामुखा एव प्रतीयन्ते । वामन-पुराणमुद्रितं कालदमनमिति नाम मुद्रणाशुद्धिजम् । कालवदनमित्येव वास्तवं नाम । तच्च कालामुखसम्प्रदायमेव बोधयति । एवं च कालवदन इति, कालास्य इति, कालमुख इति, कालामुख इति चैकस्यैव मतस्य बोधकानि पदानीति ज्ञेयम् । तथा च सिद्धान्तशैवाः, पाशुपताः, कालामुखाः, कापालिकाश्चेति शैवानां चत्वारो भेदा भवन्ति । वामनपुराणे—

ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्चने ।  
शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च ॥  
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ।  
तृतीयं कालवदनं चतुर्थं च कपालिकम् ॥  
शैवस्त्वासीत् स्वयं शक्तिर्वसिष्ठस्य प्रियः सुतः ।  
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः ॥  
महापाशुपतस्त्वासीद् भारद्वाजस्तपोधनः ।  
तस्य शिष्योऽप्यभूद् राजा ऋषभः सोमकेश्वरः ॥  
कालास्यो भगवानासीदापस्तम्बस्तपोधनः ।  
तस्य शिष्योऽभवद्वैश्यो नाम्ना क्राथेश्वरो मुने ॥  
महाव्रती च धनदस्तस्य शिष्यश्च वीर्यवान् ।  
ऊर्णोदर इति ख्यातो जात्या शूद्रो महातपाः ॥ (६।८६-९१)

—इत्यत्र चतुर्णामेषां सम्प्रदायानां चातुर्वर्ण्येन सम्बन्धः, प्रवर्तका आचार्यास्तेषां शिष्याश्च निरूपिताः। चतुर्णां वर्णानामत्र प्रतिपादितैश्चतुर्भिर्मतैः सह यथाक्रममन्वये कृते ब्राह्मणः शैवमतेन, क्षत्रियः पाशुपतमतेन, वैश्यः कालामुखमतेन, शूद्रः कापालिकमतेन शिवं समर्चयेदिति तदर्थः प्रतीयते। अत्र आपस्तम्बः कालास्य इत्युक्तः। स च कृष्णयजुर्वेदाध्यायीति काठकसिद्धान्तिनोऽपि कालामुखा एव भवन्ति । जैनधर्मवद्वैश्यास्तदनुयायिनो भवन्तीति ते कारुणिकसिद्धान्तिन[४] उच्यन्ते। महाव्रती च धनद इति वचनेन कापालिका एव महाव्रतिनः सिद्ध्यन्ति ।

एतेषु सिद्धान्तशैवानां पाशुपतानां च परिचयः प्रदत्तः । यामुनाचार्येण 'आगमप्रामाण्ये' कापालिकाः कालामुखाश्चैवं वर्णिताः —

---

४. कारुकसिद्धान्तिन इति पाठान्तरं दृश्यते। स्वच्छन्दतन्त्रे (११।७१-७२) पाशुपतानां लाकुल-मौसुल-कारुक-वैमलाख्याश्चत्वारो भेदा वर्ण्यन्ते। कारुकसिद्धान्तिन एते कारुकमतानुयायिनः स्युः । कारुकमतस्य कालामुखसम्प्रदायेन सम्बन्धो गवेषणायोग्यः ।

……………कापालं मतमेवं प्रचक्षते ।
मुद्रिताषट्कविज्ञानात् पुनस्तस्यैव धारणात् ।
अपवर्गफलप्राप्तिर्न ब्रह्मावगमादिति ॥
मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥
कर्णिका रुचकं चैव कुण्डलं च शिखामणिम् ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते ॥ इति,

"एवं कालामुखा अपि समस्तशास्त्रप्रतिषिद्धकपालपात्रभोजनशवभस्मस्नान-तत्प्राशन-लगुडधारण-सुराकुम्भस्थापन-तत्स्थदेवतार्चनादेरेव दृष्टादृष्टाभीष्टसिद्धिमभिदधानाः श्रुति-बहिष्कृता एव" (पृ० ९३-९४)[1] इति च। रामानुजाचार्येण श्रीभाष्ये (२।२।३५) कापालाः कालामुखाश्चेत्थमेव वर्णिताः।

कर्णाटकप्रदेशे प्रवृत्तस्य कालामुखसम्प्रदायस्य परिचयस्तत्रोपलब्धेषु शिलाशासनादिषु प्राप्यते। साम्प्रतमेष सम्प्रदायस्तत्र वीरशैवनाम्ना प्रवर्तते। यामुनाचार्यप्रदर्शितेन कालामुख-स्वरूपेण तद्भिन्नमिव प्रतीयते। कालपर्ययात्तस्य स्वरूपे परिवर्तनं सञ्जातं स्यात्। अथवा शैवकालामुखसम्प्रदायस्वरूपवर्णने साम्प्रदायिकः प्रभावोऽपि वैष्णवस्तदानीन्तनः कार्यरतः स्यात्। कापालिकानां चर्या प्रसङ्गतो[2] बाणभट्टरचितयोः कादम्बरीहर्षचरितयोः, भवभूतिविरचिते मालतीमाधवनाटके राजशेखरकृते कर्पूरमञ्जरीसट्टके—इत्येवमादिषु ग्रन्थेषु वर्ण्यते। प्रबोध-चन्द्रोदयनाटके वर्णितः सोमसिद्धान्तोऽपि कापालिकमतमनुसरति। अमरकोशटीकाकारः क्षीरस्वामी कपाली महाव्रती सोमसिद्धान्ती तान्त्रिकश्चेति शब्दानिमान् पर्यायान् मनुते।

[3]गुणरत्नेन नैयायिकाः शैवाः, वैशेषिकाः पाशुपता इत्युक्तम्। योगाचार्यपरम्परासु वर्तेते न्यायदर्शनप्रवर्तकस्याक्षपादस्य वैशेषिकशास्त्रप्रवक्तुः कणादस्य च नामनी। न्याय-वार्तिककार आत्मानं महापाशुपतं ख्यापयति। नैयायिकस्य भासर्वज्ञस्य पाशुपतशास्त्रव्याख्यातृत्वं प्रसिद्धमेव। एवं च नैयायिका, शैवाः, वैशेषिकाः, पाशुपता इति भेदप्रदर्शने न किमपि प्रमाणमुप-लभ्यते। "इदं मया यथाश्रुतं यथादृष्टं चात्रमाभिदधे" (पृ० ५१) इत्युक्तवता गुणरत्नेन

---

१. "गायकवाड़ ओरियण्टल सिरीज" इत्यत्र १९७६ ई० वर्षे प्रकाशितं नूतनं परिष्कृतं संस्करणमवलोक-नीयम्।

२. कापालिक्स० इत्यत्र (पृ० १६-२४) तदेतेषां विस्तृतं विवरणं द्रष्टव्यम्।

३. आचार्यहरिभद्रकृतषड्दर्शनसमुच्चयस्य व्याख्याकारो गुणरत्नस्तत्रैव मतमिदं प्रतिपादयति। तस्य प्रस्तुतोंऽशो गणकारिकापरिशिष्टे संगृहीत इति तत्र (पृ० ३०) द्रष्टव्यम्।

प्रमाणाभावोऽनुमोदित एव। वस्तुतस्तु पाशुपतमतवदीश्वरस्य निमित्तकारणत्वं मोक्षस्य दुःखाभावमात्रत्वं चाभ्युपगच्छन्तौ नैयायिकवैशेषिकौ नातीव भिन्नौ। अत एव तयोः समानतन्त्रत्वं प्रसिद्धम्। अथवा न्यायवार्तिककारभासर्वज्ञप्रामाण्येन नैयायिकाः पाशुपताः व्योमशिवप्रामाण्येन च वैशेषिकाः शैवा इत्येव सुवचम्।

कापालिकानां कालामुखानां च विषये पाश्चात्येन विदुषा श्रीमता डेविड एन. लोरेंजन-महोदयेन सपरिश्रमं निबद्धे "कापालिक्स एण्ड कालामुखस्" इत्याख्ये ग्रन्थे प्रमाणपुरस्सरं बहु विवेचितम्। तत्सर्वमस्माभिः सुपरीक्ष्यैव ग्राह्यम्। लकुलीशात् पूर्वतनस्य पाशुपतमतस्य सत्ता सन्दिग्धा, लकुलीशोऽपि न तावान् प्राचीनो यावान् हि भाण्डारकरप्रभृतिभिर्भारतीयैर्मनीषीभिः प्रतिपाद्यते—इत्यादिकास्तस्योक्तयो लकुलीशपाशुपतन्यायवैशेषिकादिदर्शनेषु यूनानदेशीयप्रभावसाधनैकप्रयोजनिकाः प्रतीयन्ते। लकुलीशपाशुपत इति पदमेव हि प्राचीन-पाशुपतमतापेक्षया तस्य पार्थक्यं प्रमाणयति। पाशुपतशास्त्रप्रवृत्तिविषये, तत्प्राचीनताविषये, ततो लकुलीशपाशुपतमतप्रवृत्तिविषये च यथाऽस्माभिः प्रमाणपुरस्सरं वक्तुं शक्यते, तथा शैवानां कालामुखानां कापालिकानां च प्रादुर्भावविषये किमपि श्रृङ्खलाबद्धं संकलनं कर्तुं नैव पार्यते। स्वच्छन्दतन्त्रे (११/७१-७२) पाशुपतानां लाकुल-मौसुल-कारुभ-वैमलाख्याश्चत्वारो भेदा वर्ण्यन्ते। त्रिषष्टिसमधिकाः शतत्रयं दार्शनिकवादाः स्वच्छन्दतन्त्रे (१०/६८०-६८१), जैनग्रन्थेषु[1] च निर्दिश्यन्ते। सावहितं दीर्घकालनैरन्तर्यसत्कारासेविते प्रयत्ने कृते तदेतेषां शैवमतानां विकासक्रमो ज्ञातुं शक्येत। एतदर्थं च प्राचीनानामागमग्रन्थानां प्रकाशनमनुशीलनं च प्राथमिकं कर्तव्यमङ्गीकार्यम्।

एवमत्र शिवशासनस्य श्रौतस्य, पञ्चस्रोतोविभक्तस्य शाखाचतुष्टयभिन्नस्य स्वतन्त्रस्य च परिचयः समुपस्थापितः। अत्र गारुडभूततन्त्रे चिकित्साशास्त्रसम्बद्धे, दक्ष (भैरव) वामतन्त्रे च प्राधान्येन शाक्तेन साम्प्रदायेन सम्बद्धचेते। अन्तिमयोः परिचयः शाक्तागममीमांसायां भविष्यतीति साम्प्रतमत्र सिद्धान्तशैवागमानां तदनुवर्तिनां प्रकाशितानां मातृकारूपेणोपलब्धानां च ग्रन्थानां परिचयः समुपस्थाप्यते संक्षेपेण।

## शैवागमग्रन्थाः

अष्टाविंशतिभेदभिन्नानां शिवरुद्रागमानां तदुपागमानां च सप्तोत्तरद्विशतसंख्याकानां नामावली कामिककारणसुप्रभेदाजिताद्यागमपठिता पाठभेदपुरस्सरं सारणीमुखेन समुपस्थापिता पाण्डिचेरीमुद्रिते 'रौरवागम' प्रथमभागे द्रष्टव्या। एतेषु मतङ्ग (विद्यापाद)-मृगेन्द्र-रौरवअजिता-

---

१. षड्दर्शनसमुच्चयटीकायां गुणरत्नकृतायां—"सूत्रकृदाख्ये द्वितीयेऽङ्गे परप्रावादुकानां त्रीणि शतानि त्रिषष्टयधिकानि परिसंख्यायन्ते" (पृ० १०) इत्युक्त्वा प्राकृगाथा स्मृता। तस्या इयं संस्कृतच्छाया—"अशीत्यधिकं शतं क्रियावादिनामक्रियावादिनां भवति चतुरशीतिः। अज्ञानिनां सप्तषष्टि वैनयिकानां च द्वात्रिंशत्॥" इति।

देवीकालोत्तर-वातुलशुद्धाख्या आगमा देवनागराक्षरेषु, कामिक-कारण-किरण-पौष्कर-सुप्रभेदागमाः कुमारतन्त्रं च ग्रन्थाक्षरेषु मुद्रिताः समुपलभ्यन्ते। सर्वज्ञानोत्तरमपि मुद्रितमुपलभ्यते। अपि च, अंशुमत्काश्यप-अंशुमद्भेद-अचिन्त्यविश्वसादाख्य-उमासंहिता-कालोत्तर-काश्यपोत्तर-चन्द्रज्ञान-चिन्त्यदीप्त-निश्वासकारिका-भीमसंहिता--मकुट-योगज-वातुल--विजय--विनायकतन्त्र-विमल-वीर-शिवधर्म-शिवधर्मोत्तर-सन्तानसंहिता-सहस्र—सिद्धतन्त्र—सूक्ष्म-स्वायम्भुवागमानां मातृकाः समुपलभ्यन्ते। मतङ्गपारमेश्वरागमस्य विद्यापादस्य रामकण्ठकृता वृत्तिः मृगेन्द्रागमस्य च सम्पूर्णस्य नारायणकण्ठकृता वृत्तिर्देवनागराक्षरेषु, पौष्करागमस्य च ज्ञानपादस्योमापतिशिवाचार्यकृतं भाष्यं ग्रन्थलिप्यां मुद्रितानि सन्ति। किरणागमवृत्तेः सार्धत्रिशतिककालोत्तरव्याख्यानस्य च मातृकारूपेणोपलब्धिः सञ्जाता।

## प्रकरणग्रन्थाः

अष्टप्रकरणेषु सद्योज्योतिशिवाचार्यकृतास्तत्त्वसंग्रह-तत्त्वनिर्णय-भोगकारिका-मोक्षकारिका-परमोक्षनिरासकारिकाख्याः पञ्च ग्रन्था रामकण्ठकृतयाऽघोरशिवाचार्यकृतया वा टीकया समुपेता देवनागराक्षरेषु मुद्रिताः। अत्र भोजदेवकृता तत्त्वप्रकाशिका, श्रीकण्ठविरचितं रत्नत्रयम्, रामकण्ठविरचिता नादकारिका च सटीकाः समाविष्टाः सन्ति। तत्त्वप्रकाशिका विस्तृतया कुमारकृतया टीकया संवलिता त्रिवेन्द्रम् नगरतो देवनागराक्षरेषु मुद्रिता। नरेश्वरपरीक्षा सद्योज्योतिशिवाचार्यकृता रामकण्ठकृतवृत्त्या सहिता काश्मीरश्रीनगरतः प्रकाशिता विद्यते। ईशानशिवगुरुदेवपद्धति-कर्मकाण्डक्रमावली-(सोमशम्भुपद्धति)-क्रियासार-वैरोचनकृत-प्रतिष्ठालक्षणसारसमुच्चय—-उमापतिशिवाचार्यकृतशतरत्नसंग्रह-–अप्पयदीक्षितकृतशिवार्चनचन्द्रिका-शिवाग्रयोगीन्द्रकृतशैवपरिभाषा-सूर्यभट्टकृतशैवसिद्धान्तपरिभाषा-शिवरहस्याख्या ग्रन्था अपि देवनागराक्षरेषु मुद्रिता विद्यन्ते। अघोरशिवकृतक्रियाक्रमद्योतिका-क्रियादीपिका-नित्यपूजालक्षणसंग्रह—परार्थ-नित्यपूजाक्रम---पवित्रोत्सवविधि-प्रतिष्ठाष्टादशक्रियापाद-अघोरशिवकृतप्रायश्चित्तविधि—वर्णाश्रमचन्द्रिका--शिवज्ञानबोधभाष्य--शिवयोगसार--शिवागमशेखर-शिवमात्रसार—शिवधर्मविवेक—शैवसंन्यास—पद्धति-सकलागमसारसंग्रह-सिद्धान्तशिखामणि-त्रिलोचनकृतसिद्धान्तसारावलिप्रभृतयो ग्रन्था ग्रन्थलिप्यां मुद्रिताः सन्ति। क्रियाक्रमदीपिका-क्रियाक्रमप्रकाशिका-क्रियानिर्णय-क्रियासार--क्रियासारसंग्रह—ज्ञानरत्नावली-देवज्ञानशिवाचार्यकृतदीक्षादर्श-त्रिलोचनशिवाचार्यकृतप्रायश्चित्तसमुच्चय—वरुणपद्धति-देवज्ञानशिवाचार्यकृतशैवपरिभाषामञ्जरी—शैवसिद्धान्तसंग्रह—साररत्नावली—सिद्धान्तप्रकाशिका—सिद्धान्तशेखर-अनन्तशिवकृत-सिद्धान्तसारावलिव्याख्या-सोमशम्भुपद्धतिव्याख्या इत्येते ग्रन्थाः केचन पद्धति-प्रायश्चित्त—पवित्रोत्सवादिग्रन्थाश्च हस्तलिपिषु समुपलभ्यन्ते। सद्योज्योतिर्बृहस्पतिभ्यां निर्मितानि वृत्तिवार्तिकभाष्यादीनि भूयांसश्च पद्धतिग्रन्था ग्रन्थकृतश्च विविधेषु ग्रन्थेषु समुद्धृता वर्तन्ते। समेषामेषां परिचयोऽस्मदीयस्य लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घाते द्रष्टव्यः।

## शैवागमप्रादुर्भावः प्रसारश्च

लकुलीशपाशुपतमतस्य गुर्जरप्रदेशे प्रादुर्भावस्तस्य राजस्थान-कर्णाटक-मथुरादिप्रदेशेषु

प्रसारश्च पूर्वमस्माभिः प्रदर्शितः । "निश्शेषशास्त्रसदनं किल मध्यदेशः" (तन्त्रा० ३७/३८) इत्यभिनवगुप्तो वदति । "तदा श्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन् ॥ त्र्यम्बकामर्दकाभिख्य-श्रीनाथा अद्वये द्वये । द्वयाद्वये च निपुणाः क्रमेण शिवशासने ॥ [३६/११-१२] इत्यपि स एव वदति । कदम्बगुहावासी, शङ्खमठिकानाथः, तेरम्बिपालाख्यश्चेति त्रय आचार्याः, आमर्दक-तीर्थम्, पुरन्दर-कवचशिवप्रभृतयश्च शैवाचार्याः पतङ्गशम्भुशिलालेखे[1] स्मर्यन्ते । [2]आमर्दकतपो-वनविनिर्गतसदाशिवाचार्यो लाटदेशकृतवसतिरिति च सप्तमशतकीयेशवीये शिलालेखे वर्ण्यते । सर्वाण्येतानि स्थानानि मध्यदेशेऽन्वेषणीयानि ।[3] तत्र कदम्बमठिका आमर्दकतीर्थं वा द्वैतागमानाम्, शङ्खमठिका द्वैताद्वैतागमानाम्, तेरम्बिमठिका चाद्वैतागमानां प्रादुर्भावस्थली ज्ञायते । आमर्दक-श्रीनाथ-त्र्यम्बकाख्याः सिद्धाः क्रमेण तदेतेषां शास्त्राणां प्रवक्तारः सन्ति । धाराधिपते-र्भोजनृपतेर्गुरुर्लाटदेशीयस्य उत्तुङ्गशिवस्य[4] कनीयान् भ्राताऽऽसीत् । एष उत्तुङ्गशिव आमर्दकतपो-वनविनिर्गतस्य सदाशिवाचार्यस्य वंशजः स्यात् ! अघोरशिवाचार्योऽप्येतेषामेवाचार्याणां शिष्य-पम्परायां वर्तमानः स्यात् ![5] अभिनवगुप्तवचनात् तत्पूर्वजा मध्यदेशत एव काश्मीरान् जग्मुरिति ज्ञायते । एवं च मध्यदेशतः शैवशास्त्रमेतत् सर्वत्र प्रसृतिं जगामेति सुष्ठूक्तमभिनवगुप्तेन "निश्शेषशास्त्रसदनं किल मध्यदेशः" [३७/३८] इति ।

शैवभूषणेऽष्टादश पद्धतिकाराः शैवागमीयाः श्रूयन्ते । तद्यथा—

> **उग्रोत्तरज्योतिरथोपसद्यः श्रीरामकण्ठोऽपि च वैद्यकण्ठः ।**
> **नारायणश्चापि विभूतिकण्ठः श्रीनीलकण्ठोऽपि च सोमशम्भुः ॥**
> **ईशानशम्भुर्द्वयमादिना स्याद् विरञ्चिवैराग्यकयुग्मवाच्यौ ।**
> **ज्ञानस्त्रिणेत्रो वरुणेश्वरौ तावित्यादयस्ते स्युरघोरशम्भुः ॥**

"उग्रज्योतिर्गुरुः श्रीमान् "(श्लो० १५७) इति मोक्षकारिकावचनेनोग्रज्योतिः

---

१. डॉ० वासुदेवविष्णुमिराशीसंदृब्धे प्राच्यविद्यानिबन्धावल्याश्चतुर्थे खण्डे संगृहीते "पतङ्गशम्भु का ग्वालियर संग्रहालय शिलालेख" इति शीर्षके निबन्धे (पृ० १७४-१७५) सर्वमेतत् प्रतिपाद्यते । आमर्दकतीर्थम् उज्जयिनीति तत्रैव (पृ० १७५) प्रोक्तम् । परीक्षणीयमेतत् ।

२. सप्तमशताब्द्याः पूर्वार्धीये शिवगुप्तबालार्जुनस्य सेनकपाटशिलालेखे आमर्दकतपोवननिर्गतस्य सदाशिवा-चार्यस्योल्लेखो वर्तते । लाटदेशीयेन नृपतिनाऽऽहूतस्तत्र जगाम सः ।

३. "निश्शेषशास्त्रसदनं किल मध्यदेशः" (३७/३८) इति तन्त्रालोकवचनात्, तत्रैव मठिकात्रयस्य वर्णन-दर्शनाच्च तदेतन्निश्चीयते । डॉ० मिराशीसंदृब्धे पूर्वोक्ते निबन्धेऽपि तथैव प्रतिपाद्यते ।

४. अघोरशिवाचार्यकृतपद्धतिवाक्यप्रामाण्येन शैवदर्शनबिन्दौ (पृ० ११-१२) तदेतद् वर्ण्यते ।

५. त्रिलोचनशिवाचार्यस्य सिद्धान्तसारावल्याम्—"राजेन्द्र चोल इत्याख्यश्चोलभूपो महीं वसन् । गङ्गा-स्नानार्थमागत्य दृष्ट्वा शैवान् वरांस्तदा ॥ स्नात्वा प्रतिनिवृत्तः सन् तान् समादाय शैवकान् । स्वराज्ये स्थापयामास शैवाचार्यवरांस्तदा । काञ्चीमध्ये चोलभूमौ सर्वत्रैव प्रविस्तराः ॥" इति वचनदर्शनाद-घोरशिवाचार्यश्चोलदेशीय एषामेवाचार्याणां परम्परायां समुद्भूदिति चिन्त्यते । अत्र "शैव कल्ट०", (पृ० ३८ स्थिता २) टिप्पणी द्रष्टव्या ।

सद्योज्योतिगुरुः ।" गुरूणामपि तौ वन्द्यौ सद्योज्योतिबृहस्पती "(पृ० १) इति च तद्वृत्तिकारेण रामकण्ठेन सद्योज्योतिबृहस्पतिपादौ शिवागमस्याद्यावाचार्यौ स्मृतौ। अत्र सद्योज्योतिर्न केवलमभिनवगुप्तेन, प्रत्युत प्रत्यभिज्ञादर्शनप्रवर्तकेन सोमानन्देनापि शिवदृष्टौ स्मृतस्ततः प्राचीन आचार्यः। बृहस्पतिपादस्य शिवतनुशास्त्रं रौरववार्तिकं चेति ग्रन्थद्वयमुद्धरणमुखेन ज्ञायते। मृगेन्द्रागमवृत्तिकारो भट्टनारायणकण्ठो विद्याकण्ठपुत्रत्वेन शङ्करकण्ठपौत्रत्वेन[1] चात्मानं, स्वपितरं च विद्याकण्ठं रामकण्ठशिष्यत्वेन वर्णयति। रामकण्ठस्य सद्वृत्तिमनुकुर्वता श्रीकण्ठेन रत्नत्रयं नाम प्रकरणं रचितम्। सद्वृत्तिकारो[2] रामकण्ठः प्रथमो विद्याकण्ठगुरुरथवा नारायणकण्ठस्य पुत्रो नानाशास्त्रव्याख्याता द्वितीयो रामकण्ठ इति साम्प्रतं परीक्षणीयं वर्तते। स्पन्दवृत्तिव्याख्याता रामकण्ठस्तु द्वाभ्यामप्याभ्यां भिन्न एव स्यात्।[3] तत्र नारायणकण्ठः क्षेमराजेन स्मर्यते।[4] सर्वे एते ग्रन्थकाराः काश्मीराभिजनाः सन्ति। सप्तमशताब्दीतो द्वादश शताब्दीपर्यन्तं वर्तमानानां शैवाचार्याणां [5]शिवान्तनाम्नां प्रथमं मध्यदेश-मालव-गुर्जरादिप्रदेशेषु तदनु च दक्षिणभारते प्रसारो दृश्यते। अष्टादशपद्धतिकारेषु काश्मीरा मध्यदेशीया दाक्षिणात्याश्च आचार्याः परिगणिता इत्यनेन स्पष्टं विज्ञायते। हन्त! साम्प्रतं तु केवलं दक्षिणभारत एव शैवागमप्रसारो विद्यते। यद्यपि काश्चन प्राचीना मातृका नेपालदेशे उदयपुरादिषु च समुपलभ्यन्ते। अधुना नेपालराजधानीतः काष्ठमण्डपनगराद् वैरोचनकृतेः प्रतिष्ठालक्षणसारसंग्रहस्य प्रकाशनं सञ्जातम्। विशालमेतद् वाङ्मयम्। नात्र सम्पूर्णस्य वाङ्मयस्य परिचयः समुपस्थापयितुं शक्यत इत्यधुनैतावदेवोच्यते।

---

१. "शाङ्करकण्ठश्रीमद्विद्याकण्ठादनुग्रहं लब्ध्वा। नारायणकण्ठ इमां तत्पुत्रो व्यरचयद् वृत्तिम्।" (पृ० ३६३) इति मृगेन्द्रवृत्तिविद्यापादसमाप्तिवचनात्तस्य शङ्करकण्ठपौत्रत्वमेव सिद्ध्यति, न प्रपौत्रत्वमिति विभावनीयम्।

२. "साक्षाच्छ्रीकण्ठनाथादिव सुकृतिजनानुग्रहायावतीर्णाच्छ्रु त्वा श्रीरामकण्ठाच्छिवमतकमलोन्मीलनप्रौढभास्वान्। श्रीविद्याकण्ठभट्टः" (पृ० २) इति मृगेन्द्रवृत्तिसमारम्भपद्यतो विद्याकण्ठगुरुः श्रीरामकण्ठ इति ज्ञायते नूनम्, किन्तु—"रामकण्ठकृतालोकनिर्मलीकृतचेतसा। रत्नत्रयपरीक्षेयं कृता श्रीकण्ठसूरिणा॥ श्रीरामकण्ठसद्वृत्तिं मयैवमनुकुर्वता॥ रत्नत्रयपरीक्षार्थः संक्षेपेण प्रकाशितः॥" (पृ० १०७) इति रत्नत्रयसमाप्तिपद्याभ्यां सद्वृत्तिकर्ता प्रथमो रामकण्ठः, नारायणकण्ठपुत्रो रामकण्ठः, अन्यो वा कश्चिदिति न निश्चेतुं शक्यते।

३. स्पन्दशास्त्रव्याख्याता रामकण्ठः, भगवद्गीताव्याख्याता च रामकण्ठः कश्मीरेषु श्रूयते। एतच्च तन्त्रयात्रायां मुद्रितेऽस्मदीये 'काश्मीरेतिहास." इत्याख्ये निबन्धे प्रपञ्चितम्। चतुर्णामप्येषां रामकण्ठानां विषये साम्प्रतमिदमित्थन्तया स्वल्पमेव ज्ञायते।

४. "श्रीमृगेन्द्रवाक्यटीकायाम्...यद्भट्टनारायणकण्ठेनोक्तम्" (४/२०८) इत्यत्र स्वच्छन्दोद्योतेऽन्यस्य कस्यचन टीकाकारस्य मतसमालोचनावसरे तदेतद् द्रष्टव्यम्। एतेन नारायणकण्ठः क्षेमराजात्, यस्य च टीकाकारस्य मतं क्षेमराजेन समालोच्यते, ततोऽपि प्राचीन इति सिद्ध्यति। स च टीकाकारो भुल्लकः स्यात्। तस्य हि मतं क्षेमराजेन नामग्राहं नैकेषु स्थलेषु खण्ड्यते।

५. डॉ० मिराशीसंदृब्धे पूर्वोक्ते निबन्धे (पृ० १७२-१८२), डॉ० वी० एस० पाठकनिर्मिते ग्रन्थे (पृ० ४६-५०) च राजगुरूणामेषां सिद्धान्तशैवाचार्याणां परिचयो द्रष्टव्यः।

नकुलीशपाशुपतदर्शनं सिद्धान्तशैवदर्शनं च सायणमाधवकृते सर्वदर्शनसंग्रहे व्याख्यायते। डॉ० कान्तिचन्द्रपाण्डेयमहोदयेनापि शैवदर्शनबिन्दौ द्वैताद्वैतदर्शनपरतया द्वैतदर्शनपरतया च तद् व्याख्यातम्। अथापि भङ्ग्यन्तरेणागमप्रामाण्यशतरत्नसंग्रहशैवपरिभाषादिपद्धत्या सुगमावबोधाय तदत्रोपन्यस्यते।

## लकुलीशपाशुपतदर्शनम्

लकुलीशपाशुपतदर्शनं पञ्चधा नवधा च ज्ञातव्यम्। तत्र यामुनाचार्येणागमप्रामाण्ये कारणं कार्यं विधिर्योगो दुःखान्त इति पञ्चधा भिन्ना पाशुपतप्रक्रिया संक्षेपेणैवं व्याख्याता—

"उपादानं निमित्तं च व्याख्यातं कारणं द्विधा।
निमित्तकारणं रुद्रस्तत्कला कारणान्तरम्॥
मह्यन्तं महदादि कार्यमुदितं तद्वद्विधिर्गीयते,
गूढाचारमुखश्मशानभसितस्नानावसानः परः।
योगो धारणमुच्यते हृदि धियामोङ्कारपूर्वं तथा,
दुःखान्तो हि मनोऽपवर्ग इति ते पञ्चापि संकेतिताः॥

आत्यन्तिकी दुःखनिवृत्तिर्दुःखान्तशब्देनोक्ता। तामेव निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणां मुक्तिं मन्यन्ते" (पृ० ९५-९६) इति।[1] सर्वदर्शनसंग्रहे, शैवदर्शनबिन्दौ, पाशुपत सूत्रपञ्चार्थभास्ययोश्चास्य विस्तरो द्रष्टव्यः।

नवधा भिन्ना च पाशुपतप्रक्रिया गणकारिकायामष्टश्लोकात्मिकायां वर्णिता—"पञ्चकास्त्वष्ट विज्ञेया गणश्चैकस्त्रिकात्मकः" इत्यादिना। तत्र लाभाः, मलाः, उपायाः, देशाः, अवस्थाः, विशुद्धयः, दीक्षाकारीणि, बलानि चेत्यष्टानां पञ्च पञ्च भेदा भवन्ति, नवमी वृत्तिश्च भेदत्रयवती विज्ञेया। नवगणस्यास्य वेत्ता आचार्योऽपवर्गमधिगच्छति।

तत्र विधीयमानमुपायफलं लाभः। ज्ञानम्, तपः, नित्यत्वम्, स्थितिः सिद्धिश्चेति तस्य पञ्च भेदा भवन्ति। आत्माश्रितो दुष्टभावो मलः। स च मिथ्याज्ञानम्, अधर्मः, सक्तिहेतुः, च्युतिः, पशुत्वमूलमिति भेदात् पञ्चविधो भवति। साधकस्य शुद्धिहेतुरुपायः। वासः, चर्या, जपध्यानम्, सदा रुद्रस्मृतिः प्रसाद इत्येते पञ्चभेदा भवन्ति तस्य। प्रसाद इत्यस्य स्थाने प्रपत्तिरिति पाठान्तरं सर्वदर्शनसंग्रहे। येनार्थानुसन्धानपूर्वकं ज्ञानतपोवृद्धीः प्राप्नोति स देशो

१. "गायकवाड़ ओरियण्टल सिरीज" इत्यतः १९७६ ई० वर्षे प्रकाशितं संस्करणं द्रष्टव्यम्। इदमत्रावधेयम्—अत्रत्यं दुःखान्तपदव्याख्यानं मुक्तिलक्षणं च न्यायवैशेषिकमतयोः प्रातिनिध्यमाचरति, न लकुलीशपाशुपतमतस्य। सर्वदर्शनसंग्रहे हि—"अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः, इह तु पारमैश्वर्यप्राप्तिश्च" (पृ० ६४) इत्येवं तत्पदव्याख्यानदर्शनात्।

गुरु-जन-गुहादेश-श्मशान-रुद्रभेदात् पञ्चधा। शैवदर्शनबिन्दौ गुरुपदेन शिवमन्दिरं जनपदेन च शिवभक्ताकीर्णं स्थानं गृह्यते। आ लाभप्राप्तेरेकमर्यादावस्थितस्य यदवस्थानं साऽवस्था, व्यक्त-अव्यक्त-जय-छेद-निष्ठाभेदात् पञ्चविधा। छेदपदस्य स्थाने दानमिति पाठान्तरं सर्वदर्शनसंग्रहे। मिथ्याज्ञानादीनामत्यन्तमपोहो विशुद्धिः। सा च अज्ञानहानिः अधर्महानिः, सङ्करस्य हानिः, च्युतिहानिः, पशुत्वहानिरीति प्रतियोगिभेदात् पञ्चविधा। द्रव्यम्, कालः, क्रिया, मूर्तिः, गुरुश्चेति पञ्च दीक्षाकारीणि दीक्षानिमित्तानि भवन्ति। गुरुभक्तिः, मतेः प्रसादः, द्वन्द्वजयः, धर्मः, अप्रमादश्चेति बलं पञ्चविधं परिगण्यते। आगमाविरोधिनोऽन्नार्जनोपाया **वृत्तय** उच्यन्ते। ताश्च भैक्षोत्सृष्टयथालब्धसंज्ञिका भवन्ति। गणकारिकारत्नटीकायां भासर्वज्ञकृतायां पदानामेषां पारिभाषिकोऽर्थो ज्ञातव्यः।

## पाशुपतो योगः

चित्तद्वारेणाऽऽत्मेश्वरसम्बन्धहेतुर्योगः। स च द्विविधः—क्रियालक्षणः क्रियोपरमलक्षणश्चेति। प्रथमो योगः शारीरिकक्रियाप्रधानतया क्रियालक्षण इत्युच्यते। क्रियोपरमलक्षणो द्वितीयो योगो नापेक्षते कामपि शारीरिकीं क्रियाम्। अयं केवलं मनोनियोगसाध्यः। तत्र जपध्यानादिरूपः क्रियालक्षणः। क्रियोपरमलक्षणस्तु निष्ठासंविद्गत्यादिसंज्ञितः।[1] वैष्णवेषु शैवेषु चागमेषु जपस्यापि योगाङ्गत्वं वर्ण्यते। इदम्प्रथमतया तदेतस्य योगाङ्गत्वं पाशुपतागमेष्वेव वर्णितं स्यात्। नहि पातञ्जले योगे जपस्य योगाङ्गेषु परिगणनमिति जानन्त्येव दर्शनेषु कृतभूरिपरिश्रमा विद्वांसः। सोऽयं पाशुपतो योगः—"पशुपतेः पाशुपतं योगविधिं व्याख्यास्यामः" (१/१) इत्यादिना पाशुपतसूत्रेषु तद्भाष्ये च कौण्डिन्यकृते व्याख्यातो द्रष्टव्यः।

## मोक्षस्वरूपम्

सर्वेषामाधिदैविकाधिभौतिकाध्यात्मिकानां दुःखानामात्यन्तिकप्रध्वंसोऽत्र मोक्षपदेनोच्यते। नायं ज्ञानवैराग्यलभ्यः, प्रत्युत ईश्वरानुग्रहेण प्राप्यते। स च द्विविधः—अनात्मकः सात्मकश्चेति। अनात्मकः केवल दुःखान्तस्वरूपः। अयमेव न्यायवैशेषिकाभ्युपगतो मोक्षः। सात्मको दुःखान्तो न केवलमाधिभौतिकादिदुःखानामात्यन्तिको विनाशः, अपि तु सर्वज्ञत्व-सर्वकर्तृत्वप्राप्तिरपि। लकुलीशपाशुपतदर्शने न केवलं बन्धमोक्ष एव मोक्षः, अपि तु पतिसायुज्यमपि। सायुज्यस्यास्मिन् दर्शनेऽतीवमहत्त्वम्। यत इदं सांख्य-योग-न्याय-वैशेषिक-बौद्ध-वेदान्तादिदर्शनाभ्युपगतमोक्षस्वरूपेभ्यो लाकुलीशं मोक्षस्वरूपं विभेदयति। एवं च यामुनाचार्यव्याख्यातो दुःखान्तो नैव लकुलीशपाशुपतीयं मोक्षस्वरूपं निर्दिशति। अत एव—"अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः,

---

१. "अव्यभिचारिणी महेश्वरे भक्तिर्निष्ठा: तत्त्वज्ञानं संवित्। शरणगमनं गतिः।" इति सर्वदर्शनसंग्रहव्याख्याकारा अभ्यंकरोपाह्वा म० म० वासुदेवशास्त्रिणः।

२. अत्र वैष्णवागममीमांसास्थिता ६२ संख्याका टिप्पणी, शाक्तागममीमांसाव्याख्यातरतान्त्रिको योगविधिश्च द्रष्टव्यः।

इह तु पारमैश्वर्यप्राप्तिश्च'' (पृ०६४) इति सायणमाधवो वक्ति । अत एव शैवपरिभाषायां शिवैकीभावेन शिवानन्दानुभव एव मोक्ष इति प्रतिपादितम् (पृ० १५६) ।

तत्र हि शिवसाम्यं मोक्ष इति पक्षः पराक्रियते । तथाहि—"शिवसाम्यमपि न मोक्षः । तच्च साम्यमुत्पत्तिसंक्रान्तिसमावेशाभिव्यक्तिभिश्चतुर्धा सम्भवति । तत्र महाव्रतिनः (कालामुखाः) उत्पत्त्या साम्यमुपगच्छन्ति । मुक्तौ तावच्छिवसाम्यमस्ति । तत्र सर्वज्ञत्वादिरूपम् । तच्च तदैवोत्पद्यते । तस्माच्छिवगुणसदृशगुणोत्पत्त्यैव शिवसाम्यमिति । पाशुपताः संक्रान्त्या साम्यमुपगच्छन्ति । कस्तूरिकाद्यामोदः पटादाविवेश्वरस्थं सार्वज्ञ्यादिकं मुक्तपुरुषे संक्रामति । तस्माच्छिवगुणसंक्रान्त्या साम्यमिति । कापालिकाः समावेशेन साम्यमुपगच्छन्ति । यथा ग्रहाः पुरुषेष्वाविशन्ति तथेश्वरगुणा मुक्तेष्वाविशन्ति । तस्माच्छिवगुणसमावेशेन साम्यमिति । शैवैकदेशिनोऽभिव्यक्त्या साम्यमुपगच्छन्ति । शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति । किन्तु संसारदशायां मलरुद्धं न प्रकाशते । मुक्तौ तु मलविगमेनाभिव्यज्यते । तस्मात् स्वीयगुणाभिव्यक्त्या शिवसाम्यमिति" (पृ० १५६-१५७) । अत्रत्योऽन्तिमः पक्षः सिद्धान्तशैवानां द्वैतवादिनामित्यनुपदमेव प्रतिपादयिष्यते ।

एवमत्र विशेषतो द्वैताद्वैतवादिनां लकुलीशपाशुपतानां सामान्यतश्च चतुर्विधानामपि शैवानां समस्तं मोक्षस्वरूपं विवेचितम् । अथ द्वैतवादिनां सिद्धान्तशैवानां दर्शनं नातिविस्तरेण प्रतिपाद्यते ।

## सिद्धान्तशैवदर्शनम्

परा चैवापरा विद्या उपनिषत्सु श्रूयते।[1] शैवं ज्ञानमपि परापरभेदाद् द्विविधं भवति । तत्र परमवबोधरूपम्, अपरं च कामिकादितन्त्रस्वरूपम्[2] । अवबोधरूपं च ज्ञानं शिवस्य शक्तिरेव । सा च द्विविधा—समवायवर्तिनी, परिग्रहवर्तिनी च । तत्र समवायवर्तिन्यपि द्विविधा-बोधरूपा, क्रियारूपा चेति । तत्र बोधरूपा सर्वार्थपरिच्छेत्री । क्रियारूपा च द्विविधा—अनुग्रहरूपा तिरोधानरूपा चेति । परावबोधरूपं ज्ञानमपरज्ञानरूपशब्दारूढमेवार्थेषु प्रवर्तते[3] । निष्कलाच्छिवादवबोधरूपं ज्ञानमेव प्रथमं नादरूपत्वेन प्रसृतम्। पश्चात् सदाशिवरूपात् तन्त्राकारतां प्राप्तमपरं ज्ञानमेव सिद्धान्तनाम्ना प्रथते[4] । एतच्च त्रिपदार्थं चतुष्पादं भवति ।

---

१. "द्वे विद्ये वेदितव्ये·· परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः····। अथ परा यया तदक्षरमधिगम्यते ॥" (१/१/४-५) इति मुण्डकोपनिषदत्र द्रष्टव्या ।

२. "ज्ञानं द्विविधमाख्यातं परं चैवापरं स्मृतम् । परं चैवाववोधाख्यमपरं शास्त्रमुत्तमम् ॥" इति देव्या मतसूत्रं शतरत्नसंग्रहसंगृहीतम् (पृ० ६) अत्र द्रष्टव्यम् ।

३. "अदृष्टाविभवाच्छान्ताच्छिवात् परमकारणात् । नादरूपं विनिष्क्रान्तं शास्त्रम्" (पृ० ७) इति शतरत्नोल्लेखिनीधृते पौष्करवचने तदेतत्प्रतिपाद्यते । स्वच्छन्दे (८/२७-३२) स्वच्छन्दोद्योतस्मृतश्रीकण्ठीसंहितावचने (पृ० १९) चैतत् तथैव प्रतिपाद्यते ।

४. "त्रिपदार्थं चतुष्पादं महातन्त्रम्" (२/२) इति मृगेन्द्रागमे विद्यापादे ।

पतिपशुपाशाख्यास्त्रयः पदार्था यस्मिन् सन्ति प्रतिपादितास्तत्त्रिपदार्थम्, [1]विद्याक्रियायोगचर्यारूपाश्चत्वारः पादा यस्मिंस्तच्चतुश्चरणं तदेतच्छिवशास्त्रं भवति। तत्र पशूनामस्वतन्त्रत्वात् पाशानामचैतन्यात् तद्विलक्षणस्य पत्युः प्रथममुद्देशः। चेतनसाधर्म्यात् पशूनां तदानन्तर्यम्। अवशिष्टानां पाशानामन्ते विनिवेश इति। दीक्षायाः परमपुरुषार्थहेतुत्वात् तस्याश्च पशुपाशेश्वरस्वरूपनिर्णयोपायभूतेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात् तदवबोधकस्य विद्यापादस्य प्राथम्यम्। अनेकविधसाङ्गदीक्षाविधिप्रदर्शकस्य क्रियापादस्य तदानन्तर्यम्। योगेन विना नाभिमतप्राप्तिरिति साङ्गयोगज्ञापकस्य योगपादस्य तदुत्तरत्वम्। विहिताचरणनिषिद्धवर्जनरूपां चर्यां विना योगोऽपि न निर्वहतीति तत्प्रतिपादितस्य चर्यापादस्य चरमत्वमिति विवेकः। तदत्र सर्वप्रथममुद्दिष्टः पतिपदार्थः प्रतिपाद्यते।

## पतिः

[2]सर्वज्ञः सर्वकर्ता सर्वव्यापी सततोदितो नित्यमुक्तः पतिरचेतनस्य जडस्य मायादेर्महामायाप्रमुखस्य जगतः प्रवृत्तिजनकतया सिद्ध्यति। [3]यस्य दृक्क्रियात्मकमैश्वर्यं स्वाभाविकं राजते स ज्ञानक्रियात्मकशक्तिद्वययुतः स्वतन्त्रः प्रभुः शिवः पतिरित्युच्यते। [4]अस्य पत्युः शरीरं स्वशक्तिकिरणात्मकमेव भवति। यथा चास्यां दिवि सविता दाहकप्रकाशकस्वभाव एव तथा तस्यां स्वशक्तिकिरणात्मिकायां परस्यां दिवि क्रीडास्थाने सुदीप्तात्मा पतिरवभासते। स च निष्कम्पोऽचलमूर्तिमान्। द्विधा हि आत्मनां मूर्तिः — चला, अचला चेति। तत्र चला तत्त्वभौवनशरीरात्मिका, अचला तु ज्ञानक्रियास्वभावा। तत्रायं पतिरचलमूर्तिमान्, न तु

---

१. "पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते। षडध्वशुद्धिविधिना गुर्वधीना क्रियोच्यते॥ वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च। ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते॥ मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः। वृत्त्यन्तरनिरोधो हि योग इत्यभिधीयते॥" (७/२/१०/३१-३३) इत्येवं शिवपुराणे तेषां लक्षणानि दृश्यन्ते, "विवेको यत्र तत्त्वानां कार्यकारणभेदतः। यथावदुचितं वस्तु हेयं चैवोपचर्यते॥ विद्यापादः स विज्ञेयः" (२/८-९), "मुद्रामण्डलमन्त्राणां लक्षणं साधकात्मनाम्। आचार्याणां च··· क्रियापादः स विज्ञेयः" (२/१०-११), "यत्रोपायो विरक्तानां षडङ्गः सुमहात्मनाम्॥ रागिणामपि भोगार्थं योगपादः स उच्यते।" (२/११-१२), "समयाचारसद्वादस्थितिः स्वाम्नायलक्षणः। चर्यापादः समुद्दिष्टः" (२/१३) इति च मतङ्गपारमेश्वरे। अत्र ज्ञानं विद्येत्यनर्थान्तरम्। विभिन्नेष्वागमेषु लक्षणानामेतेषां संकरोऽपि दृश्यत इत्यजितागमप्रथमभागसंस्कृतोपोद्घाते (पृ० १०-११) पाण्डिचेरीमुद्रिते द्रष्टव्यम्।

२. "अचेतनस्य मायादेः प्रवर्तकतया पतिः। सिद्धः सर्वार्थवित् कर्ता व्यापकः सततोदितः॥" इति विश्वसारोत्तरसूत्रमत्र परामृष्टव्यं शतरत्नसंग्रहे धृतम्।

३. दृक्क्रियात्मकमैश्वर्यं यस्य तद् दात्रपूर्वकम्। ईश्वरः सोऽत्र मन्तव्यः शक्तिद्वययुतः प्रभुः॥" इति पराख्यसूत्रस्य शतरत्नसंग्रहोद्धृतस्य व्याख्यानमेतत्।

४. "अथ पत्युरधिष्ठानं स्वशक्तिकिरणात्मकम्। तस्यां दिवि सुदीप्तात्मा निष्कम्पोऽचलमूर्तिमान्॥" (३/१) इति मतङ्गपारमेश्वरविद्यापादीयं सूत्रमत्रावधार्यताम्।

भौवनशरीरयुक्त इत्यर्थः । [1]सैषाऽचलमूर्तिलक्षणा शक्तिः सर्वोत्कृष्टा परमाण्वादेरप्यतिसूक्ष्मा सर्वदिग्गता अमृतात्मिका प्रध्वस्तावरणा शान्ता आद्यन्तशून्या करुणाभरिताऽस्य पत्युः शरीरत्वेनोपचर्यते । नहि मुख्यतया पतिव्यतिरिक्ता सा मूर्त्यात्मिका शक्तिरिति भावः । [2]स पतिर्वपुषो हस्तपादादिशरीरस्याविद्यमानत्वाद् यद् यत् कृत्यं सृष्टिस्थितिसंहारनिग्रहानुग्रहात्मकं करोति, तस्मिन् कृत्येऽस्य पत्युः शरीरं पञ्चकृत्योपयोगिना वपुषा पञ्चब्रह्मरूपेण शाक्तेन शरीरेण कल्पितं भवति । तदुक्तं मृगेन्द्रे—

**तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ।**
**ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिकम् ॥** (वि० ३।८) इति ।

पत्युरस्य च शक्तिरेव करणम्, तयैव तत्तत्क्रियानिष्पादनात् । चित्सम्बन्धिनी सा शक्तिश्चाचेतनस्वरूपा न भवति । तदुक्तं सिद्धान्तसारावल्याम् —

**शक्तिश्चित्तनुरीश्वरस्य करणं ज्ञेयेषु कार्येषु तद्,**
**भेदैः सोपहिता प्रयाति गुणतो भेदं क्रियाज्ञानतः।**
**नित्यं तत्सकलान्यकर्तृनिहिता वर्त्मन्यशुद्धे सिते,**
**कृत्यं सैव करोति पत्यनुगता वामादिशक्त्यात्मिका ॥ इति ।**

यथा लोकेऽमूर्तोऽपि कालः क्षणमुहूर्तादिकः षड्ऋतुरूपः स्वस्वोचितपुष्पफलादीनां प्रतिक्षणं द्रव्यपरिपाकस्य बाल्ययौवनादेश्च साधकः कर्ता प्रख्यायते, एवममूर्तोऽपि शिवः कार्यं क्षित्यादिकं जगत् स्वकीययेच्छाशक्त्या निष्पादयति ।

[3]एष च पतिः शिवः शक्तोद्युक्तप्रवृत्तिभेदात् त्रिविधो भवति । पत्युरेष भेदः शक्तेश्चिच्छक्तेः प्रवृत्तिभेदेन औदासीन्योद्योग-प्रवृत्तिरूपव्यापारभेदेन भवति । अत्र यच्छक्तत्वं कार्यं प्रति योग्यत्वम्, असौ निष्कलावस्था । तद्वान् शान्त इत्युच्यते । यदुद्युक्तत्वं तत् सकलनिष्कलावस्था सदाशिवः कथ्यते । प्रवृत्तक्रियत्वं तु स्थूलत्वादीश्वरः सकल इति । कृत्याविषयोऽयमवस्थाभेदः तेनोपचारादेतत् तत्त्वत्रयं भिन्नमित्युच्यते, न परमार्थत्वात् । कार्योपसंहार-कार्योद्योग-कार्यसम्पत्तिरूपा इमा निष्कलनिष्कल-सकल-सकलावस्था लयभोगाधिकारात्मना शास्त्रेषु व्याख्यायन्ते । एतच्च सर्वं किरण-पतङ्ग-पौष्कराद्यागमेषु प्रतिपादितं द्रष्टव्यम् ।

---

१. 'काष्ठा सैव परा सूक्ष्मा सर्वदिक्काऽमृतात्मिका । प्रध्वस्तावरणा शान्ता वस्तुमात्राऽतिलालसा ॥ आद्यन्तोपरता साध्वी मूर्तित्वेनोपचर्यते ।" (३/२-३) इति च तत्रैव द्रष्टव्यम् ।

२. 'वपुषोऽविद्यमानत्वाद् यद् यत् कृत्यं करोति सः । तत्र तत्रास्य तत्कर्तृ वपुषाऽनुकृतं वपुः ॥" (३।४१) इति मृगेन्द्रागमे क्रियापादे द्रष्टव्यमेतत् ।

३. "शक्तोद्युक्तप्रवृत्तश्च कर्ता त्रिविध इष्यते । शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥" इति मृगेन्द्रसूत्रत्वेन शतरत्नसंग्रहे स्मृतः श्लोकस्तत्र गवेषणीयः ।

[1]अत्र प्रपञ्चस्य ईश्वरो निमित्तकारणं, शक्तयः सहकारिकारणं, बिन्दुरुपादानकारणं भवति। तत्रापि शुद्धेऽध्वनि शिवस्य निमित्तत्वं बिन्दोरुपादानत्वम्, अशुद्धेऽध्वनि तु अनन्तस्य निमित्तत्वं मायायाश्च उपादानत्वं वेदितव्यम् । शिवशक्तिसदाशिवेश्वरशुद्धविद्याख्यानि पञ्चतत्त्वानि शुद्धानि, मायादिपृथिव्यन्तानि चैकत्रिंशत्तत्त्वान्यशुद्धान्यभिधीयन्ते । स चेश्वरो जगज्जन्मस्थितिध्वंसतिरोधानविमुक्त्याख्यानि पञ्चकृत्यानि सम्पादयति ।

## पञ्च कृत्यानि

अत्र जगच्छब्देन जन्मवज्जन्तुचक्रमुच्यते। तस्य जन्म शिवस्यैकं कृत्यम्। स्थितिस्तदिच्छा-निरुद्धस्य स्वदृष्टस्य सर्वलोकस्य पुरुषार्थप्रसिद्धये व्यापारप्रसिद्धये नियोजनं स्थापनं द्वितीयं कृत्यम् । ध्वंसः स्थित्यन्ते शुद्धाशुद्धाध्व-भोगसाधन-तनुकरणभुवनादीनां बिन्दुमायात्मककारणे विलयनद्वारा भवाध्वभ्रमणश्रान्तानां संसारिणां विश्रामायावस्थापनं तृतीयं कृत्यम् । अयमेव च ध्वंसः प्रलय इत्युच्यते। स च त्रिविधः—अधम-मध्यम-उत्तमभेदेन । ब्रह्मणो दिनान्तस्वापे कालाग्निरुद्रोर्ध्वावलोकनवह्निना भूर्भुवःस्वर्लोकानां त्रयाणां लयोऽधमः प्रलयः। श्रीकण्ठस्य दिनान्तस्वापे भूततत्त्वादिगुणतत्त्वान्तलयो मध्यमः प्रलयः। कालाग्निभुवनादिनानान्तलय उत्तमः प्रलयः । एतत्सर्वं मतङ्गपारमेश्वरे[2] विस्तरेण प्रतिपादितं द्रष्टव्यम् । अस्मिन् महाप्रलये माया-पुरुष-शिवव्यतिरेकेण सर्वेषामुपसंहारो भवति। तदुक्तं तत्त्वप्रकाशे—

> **माया पुरुषः शिव इत्येत् त्रितयं महार्थसंहारे ।**
> **अवशिष्यते पुनस्तत् प्रवर्तते पूर्ववत् सृष्टौ ॥ (श्लो० ६९)**

तिरोभावः पाशानुग्रहेण पशूनां यथानुरूपाद् भोगादप्रच्युतिश्चतुर्थं कृत्यम् । अयमेव संरक्षणा-ख्योऽन्यत्रोक्तः । विमुक्तिश्चानुध्यानमनुग्रहः पाशतिरोधानेनाणूनां परापरमोक्षदानम् । तत्रा-परमोक्षः षड्विधः, परस्त्वेकविध इति सप्तप्रकारोऽयं मोक्षो मतङ्गपारमेश्वरे[3] विस्तरेण वर्णितः। इदमनुग्रहरूपं कृत्यं शिवः सृष्टिकाले संहारकालेऽपि च करोतीति मृगेन्द्रे (वि. ५।२-३) प्रतिपाद्यते। पौष्करे तु प्रलयकालेऽपि शिवस्य[4] पञ्चकृत्यानि प्रवर्तन्त इति निर्दिष्टम् । एवं-प्रकारकस्य पतिस्वरूपस्यावबोधेन पाशेभ्यो विमुच्यन्ते पशव इति पशुस्वरूपमधुना विविच्यते ।

---

१. "निमित्तमीश्वराख्यं तद् यद् दृष्टं सहकारणम्। उपादानं च यत् सूक्ष्मं सर्वकार्येषु संहितम्॥" इति शतरत्नसंग्रहस्थितं पराख्यसूत्रम्, "शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसितो प्रभुः" इति च तत्रैव(पृ०२५) स्मृतं किरणवचनं चात्रानुसन्धेयम्।

२. विद्यापादे सकलाध्वसंहारप्रकरणे पञ्चविंशे पटले द्रष्टव्यमेतत्।

३. मुद्रिते मतङ्गपारमेश्वरविद्यापादे प्रकरणमेतन्न दृश्यते । शतरत्नसंग्रहप्रामाण्येनान्येषु पादेष्वप्रकाशितेषु सप्तविधमोक्षप्रतिपादकं प्रकरणं स्यात्।

४. "प्रलयेऽप्यनुगृह्णाति सृजत्यवति हन्ति च। तिरोदधाति भगवान् न कालापेक्षया सदा।" इति पौष्कर-वचनं शतरत्नसंग्रहोद्धृतमत्र प्रमाणत्वेन ग्राह्यम् (पृ० ३१) ।

## पशुः

[1]शरीरव्यतिरिक्तः, अनश्वरो नित्यो न तु क्षणिकः, व्यापी न तु शरीरमात्रपरिमाणः विभिन्नोऽनेको न तु वेदान्तवादिनामिवैकः, समलो मलेन सहितोऽज्ञानेनावृतः, अजडो ज्ञानक्रियास्वभावः, स्वार्जितस्य धर्माधर्मात्मकस्य कर्मणः फलभोक्ता, धर्माधर्मात्मकस्य कर्मणः सम्पादयिता, अल्पज्ञो न तु सर्वज्ञः, ईश्वरेण प्रेरितश्च भोगं मोक्षं वा भुञ्जानः पुरुषो जीवात्मा पशुरित्युच्यते शैवशास्त्रेषु । विज्ञानाकलप्रलयाकलसकलभेदात्[2] पशुरयं त्रिविध आख्यायते । तत्र प्रथमो विज्ञानयोगसंन्यासैर्भोगेन वा कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात् केवलमलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते । द्वितीयस्तु प्रलयेन कलादेरुपसंहारान्मलकर्मयुक्तः प्रलयाकल इति व्यवह्रियते । तृतीयश्च मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति संलप्यते । तत्र विज्ञानाकलो द्वि प्रकारो भवति, समाप्तकलुषासमाप्तकलुषभेदात् तत्राऽऽद्यान् कालुष्यादिपाकवतः पुरुषधौरेयानधिकारयोग्याननुगृह्यानन्तादिविद्येश्वराष्टकपदं प्रापयति । तद्विद्येश्वराष्टकं च —

**अनन्तश्चैव सूक्ष्मश्च तथैव च शिवोत्तमः**
**एकनेमस्तथैवैकरुद्रश्चापि त्रिमूर्तिकः ।**
**श्रीकण्ठश्च शिखण्डी च प्रोक्ता विद्येश्वरा इमे ।**

इत्येवं शास्त्रेषु प्रतिपाद्यते । अन्त्यान् सप्तकोटिसंख्यातान् मन्त्रान् अनुग्रहकरणान् विधत्ते । प्रलयाकलोऽपि द्विविधः—पक्वपाशद्वयस्तद्विलक्षणश्चेति । तत्र प्रथमो मोक्षम् प्राप्नोति । द्वितीयस्तु[3] पुर्यष्टकयुतः कर्मवशान्नानाविधजन्मभाग् भवति । तत्र पुर्यष्टकयुतान् विशिष्टपुण्यसम्पन्नान् कांश्चिदनुगृह्य भुवनपतित्वमत्र महेशोऽनन्तः प्रयच्छति । सकलोऽपि द्विविधः, पक्वकलुषापक्वकलुषभेदात् । तत्राद्यान् परमेश्वरस्तत्परिपाकपरिपाट्या तदनुगुणशक्तिपातेन मण्डल्याद्यष्टादशोत्तरशतं मन्त्रेश्वरपदं प्रापयति । तत्परिपाकाधिक्यानिरोधेन शक्त्युपसंहारेण दीक्षाकरणेन मोक्षप्रदश्च भवत्याचार्यमूर्तिमास्थाय परमेश्वरः । अपक्वकलुषान् बद्धानणून् भोगभाजो विधत्ते परमेश्वर एव तत्कर्मणामनुगमात् । एतच्च सर्वम् तत्त्वप्रकाशतद्व्याख्यानादिषु

---

१. "देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः । स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः प्रभुः ॥" इति शतरत्नसंग्रहसंगृहीतं पराख्यसूत्रमत्र स्मर्तव्यम् ।

२. "पशवस्त्रिविधा ज्ञेया विज्ञानप्रलयकवलौ सकलः । मलयुक्तस्तत्राद्यो मलकर्मयुतो द्वितीयः स्यात् ॥ मलमायाकर्मयुतः सकलः" (श्लो० ८-९) इत्यादिना तत्त्वप्रकाशे तट्टीकयोश्च अघोरशिव-कुमारकृतयोर्विषयोऽयं विस्तरेण प्रतिपाद्यते ।

३. "स्यात् पुर्यष्टकमन्त्रः करणं धीकर्मकरणानि" (श्लो० १२) इति तत्त्वप्रकाशकारिकायां तद्व्याख्ययोश्च पुर्यष्टकमेतन्मतान्तरनिदर्शनपुरस्सरं व्याख्यायते ।

[1]मृगेन्द्रागमतद्वृत्त्यादिषु च व्याख्यातं द्रष्टव्यम् । अथान्तिमः पाशपदार्थो वर्ण्यते ।

## पाशाः

मल-निरोधानशक्ति-महामाया (बिन्दु)-माया-कर्माख्याः [2]पञ्च पाशा भवन्ति । तत्र पाशत्वं नाम शिवानन्दाभिव्यक्तिविरोधित्वम् । तच्चाणवमलस्याच्छादकतया, तिरोधायकशक्तेस्तु तत्प्रेरकत्वेन, बिन्दुमायाकर्मणामपि भोगभोग्यसम्पादनद्वारा वैषयिकसुखादिजनकत्वेन च बोध्यम् । तत्र चत्वारः पदार्था जडरूपाः, तिरोधायकशक्तिस्तु चिद्रूपापि पाशानुग्राहकत्वात् पाश इत्युपचर्यते । प्रथमो मलाख्यः पाश आणवनाम्नापि प्रसिद्ध्यति । अस्य चाणवत्वोक्ति-र्विभोरात्मनोऽणुत्वसम्पादनात् । अथ पाशपञ्चकमेतदुद्देशक्रमेण व्याख्यायते ।

### १. मलः

[3]अनादिकालात् प्रवृत्तोऽयं मलाख्यः प्रथमः पाशो मलिनीकरोति पशोर्दृक्क्रियात्मकं तेजः प्रच्छादयतीति मल इत्युच्यते । अयं मलः पुरुषाणां पशुत्वमाणवत्वं सम्पादयति । यथा हि तुषकम्बुकः शालितण्डुलानामावापस्य उच्छूनतायाः प्रसवाभिमुखीभावस्याङ्कुरोत्पत्तेर्निमित्तम्, एवं मायायाः शिवेच्छावशादावापस्य प्रसवाभिमुखीभावस्य कलादिकार्यादेश्च तन्निमित्तं भवति । अर्थाद् यस्येदं भवति तं प्रति माया प्रसवाभिमुखीभवति कलादींश्चोत्पादयति । अत्र तुषकम्बुक-दृष्टान्तेन ताम्रकालिकादृष्टान्तोऽप्युपलक्षणीयः । यथा हि ताम्रस्य कालिका रसशक्त्या निवर्तते, तथा मलः शिवशक्त्या निवर्तत इति तस्याभिप्रायः । एवं चानेन दृष्टान्तद्वयेन मलस्य प्रवृत्ति-निवृत्तिप्रकारौ प्रदर्शितौ । [4]अज्ञानम्, तमः, अज्ञत्वम्, अविद्या—इत्यादीनि तस्य नामान्तराणि सन्ति ।

[5]एतच्च मलाख्यमावरणं सर्वभूतानां सांख्योक्तचतुर्दशविधानामपि प्राणिनामेकमेव ।

---

१. "पशवस्त्रिविधा ज्ञेयाः···इत्येवं कीर्तिताः पशवः" (श्लो० ८-१६) इत्येतेषु तत्त्वप्रकाशश्लोकेषु, "पूर्व-व्यत्यासितस्याणोः पाशजालमपोहति" (२/१) इत्यादिकेषु मृगेन्द्रागमविद्यापादीयप्रकरणेषु तद्वृत्तौ दीपिकायां चावलोकनीयमेतत् ।

२. "अर्थपञ्चकं पाशाः" (श्लो० ५) इत्यत्र पाशानां पञ्चकम्, "पाशाश्चतुर्विधाः स्युः" (श्लो० १७) इत्यत्र च पाशचतुष्टयं तत्त्वप्रकाशकारेणैव प्रतिपाद्यते । विरोधोऽयं तत्रैव व्याख्याकारैः परिहृतो द्रष्टव्यः । सर्व-दर्शनसंग्रहेऽपि (पृ० ७१-७२) विरोधोऽयं प्रमाणपुरस्सरं परिह्रियते ।

३. 'अथाऽनादिमलः पुंसां पशुत्वं परिकीर्तितम् । तुषकम्बुकवद् ज्ञेयं मायावापाङ्कुरस्य तत् ।।" इति स्वाय-म्भुवसूत्रेण शतरत्नसंग्रहधृतेन तदेतत्प्रतिपाद्यते ।

४. "मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तया । पतिः पशुरविद्येति मलपर्यायवाचकाः ।।" इति सुप्रभेदागम-वचने शतरत्नसंग्रहस्थे पर्याया इमे श्रूयन्ते ।

५. तदेकं सर्वभूतानामनादि निविडं महत् । प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत ।।" (७/८) इति मृगेन्द्रविद्यापादीयं वचनमत्रानुसन्धेयम् ।

एतच्च मायीयबन्धनवदागन्तुकं न भवति, किन्त्वनादिकालात् प्रवृत्तम् । एतच्च निविडं घनम् अभेद्यमिति यावत् । व्यापकानामात्मनामावरकत्वान्महत् । प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवच्च । प्रत्यात्मस्थाः प्रतिपुरुषं वर्तमानाः स्वकालान्तापायिन्यः स्वस्वपरिणामकालापसारिण्यो या शक्तयस्तासां समूहः सोऽस्यास्तीति तद्वत् । एवं च सति मलस्यैकत्वेऽपि तदीयावरकशक्तीनामानन्त्यात् तदावार्याणामपि भेदान्नैकमुक्तौ सर्वमुक्तिप्रसङ्गः । अस्य च मलस्य मोहादीनि सप्तविधानि कार्याणि भवन्ति । तदुक्तम् मतङ्गपारमेश्वरे —

**मोहो मदश्च रागश्च विषादः शोष एव च ।**
**वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः ॥** (८६।१०३) इति ।

एतेषां स्वरूपं तत्रैव द्रष्टव्यम् ।

## २. तिरोधानशक्तिः

[१]तिरोधानशक्तिर्द्वितीयः पाशः । मलस्य शक्तयो न स्वातन्त्र्येण रुन्धन्ति, अपसरन्ति वा किन्तु पारमेश्वररोधशक्त्यधीना भवन्ति । माहेश्वरी शैवी शक्तिस्तासां मलशक्तीनां धर्मानुवर्तनाद् धर्मस्य दृक्क्रियासंनिरोधकत्वलक्षणस्यानुवर्तनादेव पाशतया उपचर्यते । न चात्र मुख्यं पाशत्वम्, यतो हि सा सर्वानुग्राहिका सकलजगदनुग्रहस्वभावा शिवा तच्छ्रेयः प्रसाधिका च भवति । रोधशक्तेर्हि मलपरिपाकान्तमेव तिरोधानैकस्वभावत्वम्, तदनन्तरं चाणुवर्गाणामाशयविकासनहेतुत्वादनुग्राहकत्वं भवति । तथा चेयमेव पतिशक्तिर्यावन्मलपरिपाकमचिद्रूपाणि मल-कर्म-माया तत्कार्याण्यनुगृह्णाति, चिद्रूपतामात्मनस्तिरोदधाति । पाकानन्तरमात्मनोऽनुगृह्णाति । पाशं तिरोदधातीति चिदचितां सर्वेषामनुग्रहकारित्वात् सर्वानुग्राहिकेत्यपि सिद्धम् ।

## ३. महामाया (विन्दुः)

[२]शुद्धस्याध्वनो मूलभूतमुपादानकारणं वागीश्वरी महामाया । "परा वागीश्वरी विद्या मायाऽविद्याऽपरा स्मृता" इति पौष्करवचने वागीश्वर्याः परात्वं विद्यात्वं च, मायायाश्चापरात्वमविद्यात्वं च वर्ण्यते । महामायाया नादादीनि बहूनि पर्यायनामानि सन्ति । तद्यथा नादकारिकायाम्[३]—

---

१. "तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा । धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥ परिणामयत्येताश्च रोधान्तं कार्कचित्त्विषा । यदोन्मीलनमाधत्ते तदानुग्राहिकोच्यते ॥" (७/११-१२) इति मृगेन्द्रागमविद्यापादीयश्लोकाभ्यां विषयोऽयं प्रतिपाद्यते ।

२. "वागीश्वरी च शुद्धाध्वमूलोपादानकारणम् । नोपादानं विना कार्यं कदाचिदुपलभ्यते ॥" इति विश्वसारोन्तसूत्रेण शतरत्नसंग्रहधृतेन महामायास्वरूपं प्रदर्श्यते ।

३. रामकण्ठकृतनादकारिकायामष्टप्रकरणमुद्रितायां चैतत् पङ्क्तित्रयमपि दृश्यते ।

सिद्धो नादः परसुमङ्गला मालिनी महामाया ।
समनाऽनाहताबिन्दुरघोषा वाग् ब्रह्मकुण्डलिनी तत्त्वम् ॥
विद्याख्यं चेत्युक्तस्तैस्तैः शब्दैस्तदागमेष्वित्थम् ।

अनेन महामायायाः शुद्धाध्वोपादानत्वरूपं लक्षणं प्रदर्श्यते । न चात्र समवेतशक्तेरेवोपादानत्वेन सिद्धिरस्त्विति वाच्यम्, तस्या उपादानकारणत्वेऽचेतनत्वापत्त्या चेतनशिवसमवायायोगात् । एवं च समवायिशक्तेरधो वर्तमाना सैषा महामाया मायाकर्मानुसारिणी प्रवर्तमाना शिवस्य परिग्रहशक्तिरित्युदीर्यते । [1]सैव कुण्डलिनी शक्तिरित्यप्यभिधीयते । "अत्र कुण्डलिनीशब्दवाच्या तु भुजङ्गकुटिलाकारेण नादात्मना स्वकार्येण प्रतिपुरुषं भेदेनाऽवस्थिता, न तु स्वरूपेण प्रतिपुरुषमवस्थितेत्यर्थः" इति सर्वज्ञानोत्तरवृत्तिकारः । तस्या महामायायाः सकाशान्नाद-बिन्द्वादिकं कार्यं निष्पद्यते । अत्रायमाशयः —

[2]शिवेन समवायिशक्त्या क्षुब्धाया महामायायाः कुण्डलिन्याः सकाशान्नादाभिधानं तत्त्वं प्रथममुत्पद्यते । इदमेव शिवाधारतया शिवतत्त्वमित्यपि वदन्ति । ततो बिन्दुसंज्ञकं तत्त्वमुत्पद्यते, इदं च तत्त्वं शक्त्याधारतया शक्तितत्त्वम् । ततः शक्तितत्त्वात् सादाख्यं तत्त्वम् । ततः सादाख्यादीशाख्यं तत्त्वम् । ईशाख्याच्च विद्याख्यं तत्त्वमिति क्रमेण शुद्धानि पञ्चतत्त्वानि जायन्ते । तत्र विद्यातत्त्वे विद्यातत्त्वाधिपतिश्च, भृगुण्यादयः सप्त विद्याराज्यश्च, तदधीनाः सप्तकोटिमहामन्त्राश्च, वाचकशब्दा व्योमव्याप्यक्षरादयश्च, वैरूर्यादयश्च, कामिकाद्यष्टा-विंशतितन्त्राणि च वर्तन्ते । ईश्वरतत्त्वेऽनन्तादयोऽष्टौ विद्येशाः, तदधिष्ठात्र्यस्त्वष्टौ वामादि-शक्तयः, तद्विलासिन्यः शक्तयोऽष्टौ भानुमत्यादयः, उच्छुष्मादयः पञ्च रुद्राः, सिद्धान्तशास्त्रैः प्रपूजिता नन्द्याद्यष्टौ गणेश्वराः, इन्द्रादयो लोकपालास्तेषामायुधानि च, शिवासनभूता धर्मादयोऽष्टौ च स्थिताः । सदाशिवतत्त्वे तु तदधिकारावस्थः सदाशिवः, प्रणवाद्या दश अणवः, पञ्च ब्रह्म, षडङ्गानि च, अक्षरबिन्दुस्थूलध्वनिरूपो नादश्च वर्तते । बिन्दुतत्त्वे तु भुवनरूपो निवृत्तिमदादि-संज्ञः सद्योजातादिसंज्ञः सकलनिष्कलाख्यः शिवः, अक्षरबिन्दुहेतुस्वरूपः सूक्ष्मनादश्च वर्तते । नादतत्त्वे तु ध्वनिपतिरिन्धिका वा दीपिका वा रेचिका वा निवृत्त्यादिभुवनपतिसंज्ञोऽनुत्तरः शिवो वर्तते । चिच्छक्ती शक्तिमद्वरिष्ठः परमेश्वरः सकलजगत्परमकारणं कुण्डलिनी च वागीशां पतयश्च राजन्ते । तदूर्ध्वं केवलः शिव" इति ।

इदं नादतत्त्वमेव परमकारणं नित्यम् । तदेव महामायेति केचिदाचार्या वदन्ति । तेषां मते चत्वार्येव कार्याणि शुद्धतत्त्वानि । श्रीमत्पौष्करे तु नादाभिधानं शिवतत्त्वमपि कार्यमेव, किन्तु तत्र शक्तितत्त्वान्तर्भावेण चत्वार्येव कार्याणि शुद्धानीत्युक्तम् । सर्वज्ञानोत्तरे तु शक्त्य-

---

१. "याऽथ कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी । नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः ॥" इति स्वतन्त्रीयसूत्रमत्र प्रमाणत्वेनावधार्यं शतरत्नसंग्रहस्थम् (पृ० ४१) ।

२. "पञ्चविंशतितत्त्वं हि शिवतत्त्वाद् विनिर्गतम् । तत्र स्थितिश्च वृद्धिश्च तत्रैव च लयो भवेत् ॥" इति कालोत्तरसूत्रव्याख्यानमुखेन शतरत्नसंग्रहे प्रतिपादितोऽयं विषयः :

भिधानं बिन्दुतत्त्वमेव परमकारणमित्युक्तम् ।

वाग्रूपा वैखर्यादयश्चतस्रस्तस्या महामायाया वृत्तयः कार्याणि। एका वृत्तिर्नाम्ना वैखरीत्युच्यते, अन्या मध्यमा, अपरा पश्यन्ती, चतुर्थी च सूक्ष्म(परा) संज्ञिता । अनेन शब्द-सृष्टिरपि बिन्दूपादानेत्युक्तं भवति। अत्रायं सृष्टिक्रमः— शिवेच्छया प्रथमं क्षुब्धाया महामायायाः सकाशान्नाद उत्पद्यते, नादाद् बिन्दुः, बिन्दोरक्षरम्, अक्षरान्मातृकेति ।

[2]आसां चतसृणामपि वृत्तीनामाश्रयभूता निवृत्त्यादयः पञ्च कलाश्च बिन्दोरेव कार्याणि । [3]इयं महामाया शब्दवस्तूभयात्मिका भवति, शब्दात्मकानां वर्णपदमन्त्राणां वस्त्वात्मकानां कलातत्त्वभुवनानां चोत्पादनात् । अत्र शब्दब्रह्मवादिन आत्मन एव नादादिक्रमेणावस्थानमिति वदन्ति । तदयुक्तम्, अविकारिणस्तस्य नादाद्याकारेण परिणामानुपपत्तेः । नापि च तच्छक्तेः, तस्या अपि परिणामायोगात् । द्वयोरपि विकारित्वाभ्युपगमेऽचेतनत्वप्रसङ्गात् । तस्मात् शब्दो-पादानत्वं बिन्दोरेवाभ्युपगन्तव्यम् ।[4] बिन्दुश्चायं महामायापदभागिति प्रागेव प्रतिपादितम् ।

## ४. माया

[5]मात्यस्यां प्रलये सर्वं जगत्, मयति जगदिति वा माया । यथा पौष्करे—"मयत्यस्मा-

---

१. "तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः । वैखरी मध्यमा चान्या पश्यन्ती सूक्ष्मसंज्ञिता ॥" इति तत्रैवोद्धृतं (पृ० ४५) स्वतन्त्रतन्त्रीयं वचनान्तरं प्रमाणत्वेन ग्राह्यम् ।

२. "सैषा चतुर्विधा वृत्तिर्निवृत्त्यादिकलाश्रयात् । पञ्चधा भिद्यते भूयः कलास्ता बिन्दुवृत्तयः ॥" (श्लो० ८५) इत्यत्र रत्नत्रये श्रीकण्ठेन प्रतिपादितोऽयमर्थः ।

३. तथा च पौष्करे—"शब्दवस्तूभयात्मानो बिन्दुर्नान्यितरात्मकः" इति, "मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः । भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात् ॥" इति च । शतरत्नसंग्रहे द्रष्टव्यमेतत् (पृ० ४६) ।

४. "निमित्तमीश्वरस्तेषामुपादानं स बिन्दुराट्" (८/१७) इति पौष्करवचने शुद्धेऽध्वनि बिन्दोरुपादानत्वं प्रतिपाद्यते । एतच्च प्रकरणारम्भे निर्दिष्टमेव । श्रीकण्ठेन रत्नत्रये सिद्धान्तसागरात् शिवशक्तिबिन्द्वा-ख्यानि त्रीणि रत्नानि समुद्धृतानि (श्लो० २) । सर्वप्रथमं च—"जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते । स बिन्दुः परनादाख्यो नादाबिन्द्वर्णकारणम् ।" (श्लो० २२) इत्यादिना प्रकरणेन बिन्दुस्वरूपा-दिकं वर्णितम् । अनेन च परनादाख्यो बिन्दुरयं नादबिन्दुप्रभृतीनां कारणतयाऽभिप्रेयते । अत एव स— "शब्दतत्त्वमघोषा वाग् ब्रह्मकुण्डलिनी ध्रुवम् । विद्या शक्तिः परा नादो महामायेति देशिकैः ॥ बिन्दुरेव समाख्यातो व्योमानाहतमित्यपि ।" (श्लो० ७१-७२, पृ० ३०) इत्यादीनि पर्यायनामानि तस्य वक्ति । एवं च शुद्धाध्वनि बिन्दोरेवोपादानत्वम्, बिन्दुरेव महामायापदेनाप्यभिलप्यत इति च सिद्धान्ते शैवागम-सम्मतो निष्प्रत्यूहः पन्थाः ।

५. "मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम् । विश्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम् ॥" इति शतरत्न-संग्रह (पृ० ४६) धृतस्वायम्भुवसूत्रेणायं विषयः प्रतिपाद्यते । शुद्धा माया महामायापदेन, अशुद्धा च केवलं मायापदेनात्राभिधीयत इति च विभावनीयम् ।

ज्जगत्सर्वं तेन माया प्रकीर्तिता" इति। मायारूपं तत्त्वं मायातत्त्वम्। इदमेव तत्त्वं ग्रन्थ्यादि-नामभिर्बहुभिर्गीयते। एतच्च तत्त्वं जगद्बीजं जगतः सर्वस्य कलादेर्बीजमुपादानकारणम्। अविनाशि नित्यम्। जगत्संहारे यद्युपादानकारणस्य मायाख्यस्यापि विनाशः स्यात्, तत्पुनः सर्गादौ कस्मादुपादानाज्जगदुत्पद्येत। अतो नास्या अनित्यत्वम्। अशिवात्मकमशुद्धम्, शिवात्मकं चेतनं न भवतीत्यशिवात्मकम्। अचेतनमिति यावत्। विभु व्यापि। सर्वकार्योत्पादकत्वात्। एवं पक्षतुण्डादिभेदानामपि भोगाधिष्ठानत्ववत् कलादिकार्यभेदानामपि भोगाधिष्ठानतया भेदरहितमेकम्। भिन्नत्वेऽनेकत्वे सत्यचेतनस्य घटपटादिवदुत्पत्तिमत्त्वप्रसङ्गात्। इदं तु नोत्पत्तिमन्न कारणजन्यम्, परमकारणत्वात्। नहि परमकारणानि बहूनि भवन्ति। अकलं, कलारहितम्। सूक्ष्मम्, न स्थूलम्। अव्यक्तबुद्ध्यादिवत् स्थूलं न भवतीत्यर्थः। सूक्ष्मतारतम्य-विश्रान्तिभूमित्वादिदमेव सूक्ष्मम्, "यत्र सौक्ष्म्यपराकाष्ठा सा मायेत्यभिधीयते" इति पौष्करोक्तेः। अनादि, परमकारणत्वात्। यच्चानादि न तत् सर्वात्मना परिणमते, किन्तु घृतकीट-न्यायेन एकदेशतयैव। अव्ययम्। न तस्या विकारशक्तयो व्ययं विनाशं गच्छन्तीत्यव्ययम्, शक्तिव्ययरहितमित्यर्थः। इत्थं सर्वविकाराणामुपादानतयाऽऽपूरकत्वेन ईश्वरवत् पुरुषार्थसाधना-दीश्वरत्वमप्यस्य मायातत्त्वस्य सिद्ध्यति।

अस्य मायातत्त्वस्य एकत्वेऽप्यनेकाकारकार्योत्पादकत्वं सहकारिसापेक्षत्वं च मृगेन्द्रागमे प्रतिपाद्यते। तद्यथा—'-तदेकमशिवं बीजं जगतश्चित्रशक्तिमत्। सहकार्यधिकारान्तसंरोधि व्याप्यनश्वरम्॥ (१/६/२) इति। अस्यार्थः—तन्मायातत्त्वमेकम्। अशिवमशुद्धम्, मोहकत्वात्। जगतो बीजम्। चित्रशक्तिमत् चित्रा विचित्राः शक्तयो यस्य तत् तथोक्तम्। तथा चास्य एकत्वेऽपि तच्छक्तीनामनेकत्वात् विचित्रकार्यजनकत्वं सिद्ध्यति। सहकार्यधिकारान्तसंरोधीत्यनेन कर्मसहकारीत्युक्तम्, कर्माभावे मायाख्यस्य ग्रन्थितत्त्वस्याप्रवृत्तेः। व्यापि अनश्वरम्। तदेनां मायामुपादायानन्तेशोऽशुद्धां सृष्टिं कला-काल-विद्या-रागाद्यात्मिकां तनुते।

बिन्दूपादाना मायोपादाना चैषा शुद्धा अशुद्धा च सृष्टिः[2]प्रेरककाण्डत्वेन, भोक्तृकाण्डत्वेन

---

१. "शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽन्तोऽसिते प्रभुः" इति किरणसूत्रम्, "मायाविक्षोभकोऽनन्तो महेश्वरसमन्व-यात्" इति कैलाससंहितावचनं शतरत्नसंग्रहस्थम् (पृ० ५०), "क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा। तदा स्वेन विकारेण तनोति विपुलं जगत्॥" (६/२) इति मतङ्गपारमेश्वरवचनं चात्र स्मर्तव्यम्।

२. अचिन्त्य-सिद्धान्तरहस्यसारादिप्रामाण्येन तदेतत् शतरत्नसंग्रहोल्लेखिन्यां (पृ० ५३-५४) प्रतिपाद्यते। शुद्ध-शुद्धाशुद्ध-अशुद्धभेदेन तत्त्वानां विभागो नित्याषोडशिकार्णवव्याख्यायामर्थरत्नावल्यां (पृ० २०८-२०६) दृश्यते। एतेषां त्रयो विभागाः शिव-विद्या-आत्मनामानो योगिनीहृदयदीपिकायामुद्धृते (पृ० २४२) स्वच्छन्दसंग्रहवचने, सौभाग्यसुधोदये (१/४६) च वर्ण्यन्ते। तत्र चाविनाभावेनावस्थितौ शक्तिशिवौ शिवाख्यं प्रथमं तत्त्वम्, सदाशिवतः शुद्धविद्यापर्यन्तं शुद्धाशुद्धतत्त्वानिवि द्याख्यानि, मायातः पृथिवी-पर्यन्तमशुद्धतत्त्वान्यात्मनामधेयानि। योगिनीहृदये मन्त्रसङ्केतप्रकरणे षड्विधमन्त्रार्थनिरूपणावसरे त्रीणी-मानि तत्त्वानि व्याख्यातानि।

भोग्यकाण्डत्वेन च क्वचिद् विभज्यते। तत्र प्रेरककाण्डं शुद्धम्, नादादिपञ्चतत्त्वात्मकत्वात्, वैखर्यादिप्रेरकत्वात्, तद्भुवनवासिनां सर्वज्ञत्वात् सर्वकर्तृत्वाद् दुःखादिरहितत्वाच्च। भोक्तृकाण्डं शुद्धाशुद्धम्। तद्वासिनां किञ्चित्सर्वज्ञत्वेन शुद्धत्वम्, दुःखादियोगेनाशुद्धत्वं च। भोग्यकाण्डमशुद्धम्, तद्वासिनां सदाकिञ्चिज्ज्ञत्वात्, दुःखादियुक्तत्वाच्च। एवमत्र षट्त्रिंशत्तत्त्वात्मकस्य जगतः समाहारो भवति। तद्यथा—

अशुद्धं तु चतुर्विंशच्छुद्धाशुद्धं च सप्तधा।
नित्यशुद्धं च पञ्चैते षट्त्रिंशत् तत्त्वरूपकम्॥ इति।

## ५. कर्म

कर्माख्यः पञ्चमः पाशोऽधुनात्र निरूप्यते— युगपत्सेवाकृष्यादिप्रवृत्तयोर्द्वयोः पुरुषयोरेकस्य फलसिद्धेरितरस्यादर्शनाच्च तत्र धर्माधर्मात्मकस्य स्वोपार्जितस्य कर्मणः कारणत्वमङ्गीक्रियते। धर्माधर्मात्मकमिदं कर्म विश्वसारोत्तरसूत्रपद्धत्या जातिप्रदमायुःप्रदं भोगप्रदं चेति त्रिविधं भवति। "सति मूले तद्विपाको जात्यायुर्भोगाः" (२/१३) इति योगसूत्रेऽपि तत् पठ्यते। तत्र जातिर्देवत्वादिः। आयुः शतवर्षेष्वपि जीवनादि। भोगः सुखदुःखानुभवः। एते जात्यादयोऽप्युत्तमादिक्रमेण त्रिविधा भवन्तीति मतङ्गे[2] धर्माधर्मनिर्णयपटले निरूप्यन्ते 'दृष्टमदृष्टं चेति द्विविधं कर्म'[3] मृगेन्द्रमतङ्गयोर्वर्ण्यते। क्रियावसानिकं दृष्टम्, तस्य संक्षये फलप्रवणं कर्म चादृष्टमित्युच्यते। तत्रादृष्टं कर्म देहेन्द्रियभुवनादेर्जनकधारकं भोग्यमध्यात्मादित्रिसाधनं च भवति। तत्राध्यात्मशब्देनान्तःकरणसन्निकर्षेण आत्मानमधिकृत्य यद् वर्तते तन्मतिरित्युच्यते। आदिग्रहणाद् वाक् कायक्रिये च गृह्येते। [4]एवं च मनोवाक्कायक्रियाः साधनं यस्य तद् यथाक्रममिष्टदेवतानुध्यान-नमस्कार-स्तोत्रपाठ-यजनादिरूपं धर्मात्मकं कर्म। परस्वहरणेच्छा-तत्प्रवाद-तदुपघातादयो यथासंख्यं मनोवाक्कायक्रियासाधनं यस्य तद्धर्मात्मकं कर्म। [5]सत्यानृतयोनित्वादेतत् कर्म धर्माधर्मात्मकं भवति। एतच्च स्वापे विपाकमेति, सृष्टावुपयोगमेति, संहारकाले च मायायां तिष्ठति। न चैतदभुक्तं क्षीयते। पौष्करेऽप्येवमुक्तम्—"नाभुक्तं क्षीयते कर्म कल्पकोटि-शतैरपि" इति। दीक्षाप्रायश्चित्तादिना तु तस्य क्षयो भवत्येव।

---

१. "धर्माधर्मात्मकं कर्म तत्र त्रिविधमर्थतः। जात्यायुर्भोगदं येन नामिश्रं पच्यते क्वचित्॥" इति विश्वसारोत्तरसूत्रं शतरत्नसंग्रहधृतमत्र स्मरणीयम् (पृ० ५४)।

२. मतङ्गपारमेश्वरे विद्यापादे (२६/६-८) द्रष्टव्यमेतत्।

३. "कर्मव्यापारजन्यत्वाददृष्टं सूक्ष्मभावतः" (८/३) इत्यादिना मृगेन्द्रे विद्यापादे," लोकेऽपि सुप्रतीतं स्याद् द्विविधं कर्म कर्मिणाम्। क्रियावसानिकं दृष्टमदृष्टं तत्र संक्षये॥" (७/६१-६२) इत्यत्र च मतङ्गे विद्यापादे तदेतत् प्रतिपाद्यते।

४. शतरत्नसंग्रहे (पृ० ५५-५६) अचिन्त्यादिप्रामाण्येन विषयोऽयं प्रतिपादितः, "जनकं धारकं भोग्यमध्यात्मादित्रिसाधनम्" (८/४) इत्यत्र विद्यापादे मृगेन्द्रागमवृत्तौ नारायणकण्ठेन च व्याख्यातः।

५. "तत्सत्यानृतयोनित्वाद् धर्माधर्मस्वरूपकम्॥ स्वापे विपाकमभ्येति तत् सृष्टावुपयुज्यते। मायायां वर्तते चान्ते नाभुक्तं लयमेति च॥" (८/४-५) इति मृगेन्द्रागमविद्यापादवचनमत्रानुसन्धेयम्।

अनेकजन्मसंचितं हि कर्म दीक्षापुरश्चरणादिना साधितैर्मन्त्रैर्दग्धं फलदानाय तथैवासमर्थं भवति, यथा हि वह्निना दग्धं बीजमङ्कुरदानाय न क्षमते। किरणागमे सुप्रभेदागमे चैतत् प्रतिपाद्यते। मन्त्रोपहितशक्तिकं हि संचितं कर्म फलदानाय न क्रमते, आगामिकर्मापि च मन्त्रशक्त्या प्रतिबद्धं भवति। येन कर्मणा पुनरिदं शरीरं निष्पादितं तत् प्रारब्धकर्म भोगत उपशमं याति। तथा च प्रारब्धकर्मव्यतिरिक्तकर्मणामेव दीक्षादिनां निरोधः। एतच्च प्रारब्धं कर्म त्रिविधम्—इच्छाप्रारब्धम्, अनिच्छाप्रारब्धम्, परेच्छाप्रारब्धं चेति। एतेषां लक्षणानि [2]पञ्चदश्यादिग्रन्थेषु द्रष्टव्यानि।

[3]घटफलाभिव्यक्तये तावत् कुम्भकारश्चक्रं भ्रामयति। घटनिष्पत्तौ जातायामपि पूर्ववद् यथा तच्चक्रं भ्रमत्येव, तथैव पूर्वसंस्कारानुविद्धमिदं शरीरमर्थनिष्पत्तौ जातायामप्यवतिष्ठते। [4]हिङ्गुत्यक्ते पात्रे यथा गन्धो न नश्यति, तथा कुलालचक्रं कर्मान्तेऽपि भ्रमति। अवस्थितवेगाख्यसंस्काराद् यथा चक्रस्य भ्रमणं घटकार्यं च निष्पद्यते, तथा धर्माधर्मलक्षणात् कारणात् संस्कारविशेषो जायते। तस्माच्च संस्कारविशेषादिदं शरीरमवतिष्ठते।

एवं क्रमेणोक्तानि मल-तिरोधानशक्ति-महामाया-मायाकर्माणि पञ्चापि पुरुषबन्धकतयाऽस्मिन् शास्त्रे पाशपञ्चकत्वेन प्रसिद्धानि।

## मोक्षः

एतेषां पाशानामसंस्पर्शे शिवसाम्यरूपं मोक्षं क्रमेणायमात्मा प्राप्नोति। अस्यां स्थितावपि स शिवात् पृथगेव सन्तिष्ठते। अतो मोक्षेऽपि पशोः शिवात् पृथक् सत्तास्वीकाराद् द्वैतमिदं [5]दर्शनम्। आत्मा यदा कर्मसाम्यमलपरिपाकाभ्यां युज्यते, तदा तस्मिन्ननुग्रहाख्या पारमेश्वरी शक्तिः पतति। [5]शक्तिपात इति समाख्यया तदागमेषु परिचीयते। तत्र कर्मसाम्यं नाम समवेतयो-

---

१. "अनेकभविक कर्म दग्धं बीजमिवाणुभिः। भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः॥" इति शतरत्नसंग्रहगृहीतं (पृ० ६१) किरणागमवचनमत्र द्रष्टव्यम्।

२. "इच्छाऽनिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम्" (७/१५२) इत्यादिना पञ्चदश्यां विद्यारण्यमुनिभिस्तदेतत् प्रतिपाद्यते। एतेषां लक्षणानि पञ्चदश्याम् (७/१५३), भगवद्गीतायाम् (१८/६०), पञ्चदश्यां (७/१६२) च क्रमशो द्रष्टव्यानि। शतरत्नसंग्रहे (पृ० ६१-६२) सर्वमेतत् संगृहीतम्।

३. "जातायां घटनिष्पत्तौ यथा चक्रं भ्रमत्यपि। पूर्वसंस्कारसंसिद्धं तथा वपुरिदं स्मृतम्॥" इति किरणागमसूत्रंशतरत्नसंग्रहोद्धृतं (पृ० ६२) द्रष्टव्यमत्र।

४. "हिङ्गुत्यक्ते तु तत्पात्रे गन्धस्तत्र न नश्यति। कुलालचक्रं कर्मान्ते यथा भ्रमति वै तथा॥" इति सुप्रभेदागमवचनं शतरत्नोल्लेखनीस्थमत्र स्मर्तव्यम्।

५. डॉ० कान्तिचन्द्रपाण्डेयविरचिते शैवदर्शनाबिन्दौ (पृ० २५)।

विरुद्धफलयोः पुण्यरूपयोरपुण्यरूपयोः पुण्यापुण्यरूपयोर्वा युगपत् फलोन्मुख्यम्। इदं च तिरोधान-शक्तिनिवर्तनद्वाराऽनुग्रहशक्तिनिपाते हेतुः।[1] अस्य च शक्तिपातस्य संसारविद्वेषमुमुक्षा शिवभक्त्यादीनि चिह्नानि। एतैश्चिह्नैरञ्चितं संजातशक्तिपातं शिष्यं विलोक्य गुरुस्तं दीक्षयति, [2]षडध्वशुद्धिमुखेन क्रियाकलापेन तस्य मलान् विशोधयति। शैवेषु वैष्णवेषु चागमेषु कर्मणां भोगहेतुत्ववत् कर्मसाम्यावस्थायां[3] मोक्षहेतुत्वमपि स्वीक्रियते। आचार्यशिष्ययोरुभयोरपि सम्बन्धसम्पादकोऽत्र शिवस्वरूपो मन्त्र एवाभिमन्यते। शक्तिपातसमन्वितो हि शिष्यो देशिकमनुप्राप्य दीक्षाक्षपितकल्मषो निर्मलः सन् शिवसाम्यं लभते। शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति। किन्तु संसारदशायां मलरुद्धं न प्रकाशते। मुक्तौ तु मलविग-मेनाभिव्यज्यते।[4] तस्मात् स्वीयगुणाभिव्यक्त्या शिवसाम्यमिति सिद्धान्तशैवा अभिव्यक्त्या शिवसाम्यमङ्गीकुर्वते।

## उपसंहारः

एवमत्र द्विविधः, चतुर्विधः, पञ्चस्रोतोभिन्नश्च शिवागमस्तद्वैशिष्टचं च मनागिव वर्णितम्। प्रतिपादितौ लकुलीशपाशुपतदर्शनयोगौ, निर्दशितं च पतिपशुपाशस्वरूपनिरूपकं सिद्धान्त-शैवीयं दर्शनम्। शैवागमनिरूपितो योगस्तु शाक्तागममीमांसायां विवेचयिष्यते, पुनरुक्ति-परिहाराय साम्यवैषम्यप्रदर्शनाय च।

वैष्णवागमेषु स्त्रीशूद्रादयोऽपि दीक्षाधिकारिणोऽभिमताः, किन्तु प्राचीनासु पाञ्चरात्र-संहितासु सच्छूद्रा एवार्चादिष्वधिक्रियन्ते। "यथोक्तं कालपादायां दीक्षयेच्छ्वपचानपि" (मा० वा०, पृ० २०), "एकैव सा स्मृता जातिर्भैरवीया शिवाव्यया। ...प्राग्जात्युदीरणाद् देवि प्रायश्चित्ती भवेन्नरः ॥" (स्वच्छन्द० ४।५४३-५४४) इत्युदीरयन्तः शैवा आगमास्तु

---

१. शिवाग्रयोगीन्द्रज्ञानशिवाचार्यविरचितायां शैवपरिभाषायां (पृ० १३४) तदेतद् द्रष्टव्यम्। मृगेन्द्रागमवृत्तौ विद्यापादे नारायणकण्ठेनापि—"समे कर्मणि संजाते कालान्तरवशात् ततः। तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥ सर्वज्ञः स शिवो यद्वत् ॥ (पृ० १८५) इति किरणागमवचनमुद्धरता तदेतत् प्रति-पाद्यते।

२. वैष्णवागमानुसारिणी षडध्वशुद्धिप्रक्रिया सात्त्वतसंहिताया उपोद्घाते (पृ० ३८), "वैष्णवेषु तदितरेषु वाङ्मयेषु षडध्वविमर्शः" इति शीर्षके तन्त्रयात्रायां पुनर्मुद्रिते (पृ० १४-३४) निबन्धे, भुवनाध्वादिरूपेण चिन्तयेत्" (श्लो० ५५) इति विज्ञानभैरवश्लोकव्याख्यानावसरे च शैवशाक्तागमानुसारिण्यपि सा प्रक्रिया व्याख्याता द्रष्टव्या।

३. कर्मणो मोक्षसम्पादकत्वं वैष्णवागममीमांसायाः ८७ संख्याकायां टिप्पण्यां प्रतिपादितं द्रष्टव्यम्। "सत्यपि कर्मणि तत्साम्यान्मुक्तेराम्नातत्वात्" (पृ० १८५) इति मृगेन्द्रवृत्तिविद्यापादीयवचनमत्रानुसंधेयम्, अनुपदमेवोक्तं किरणागमवचनं च।

४. शिवाग्रयोगीन्द्रज्ञानशिवाचार्यविरचिता शैवपरिभाषा (पृ० १५७) द्रष्टव्या।

मानवमात्रं दीक्षाधिकारिणं मन्वते । स्वतन्त्राश्च शिवागमाः कामिकादयः स्वीयं वेदनिरपेक्षं स्वतन्त्रं प्रामाण्यमङ्गीकुर्वन्ति । वैरोचनीयस्य प्रतिष्ठालक्षणसारसमुच्चयस्य—"शूद्रे चैव भवेद् वृत्तं ब्राह्मणे च न विद्यते। मन्तव्यो विप्रवच्छूद्रः शूद्रात् पापतरस्तु सः ॥ ...संस्कृतानां यतस्तेषां नश्यन्ति पूर्वजातयः। ये ब्राह्मणा न ते शैवा ये च शैवा न ते द्विजाः । ...द्विजबौद्धादि-यागेषु मन्त्राः शैवा यथेह न। तथैव शिवयागेषु न मन्त्रा वैदिकादयः॥ न वेदे त्रिविधं लिङ्गं न च प्रासादलक्षणम्। न द्वारं मण्डपादिश्च स्थापनं न शिवादिके । ...न वेदे शैवसंस्कारो नापि वेदे शिवव्रतम्। न च शैवी क्रिया वेदे न च खड्गादिसिद्धयः।" (२।१४४, १५३, १५५, १५६, १६०) इत्येतानि वचनानि तमिमं विषयं समर्थयन्ति ।

पाञ्चरात्रागमेषु विभवावतारेषु लोकनाथः शान्तात्मा बुद्धावतारत्वेन स्वीक्रियते । श्रीमद्भागवते च विष्णोश्चतुर्विंशत्यवतारेषु तस्य परिगणनं भवति। वैरोचनीये पूर्वोक्ते लक्षण-समुच्चये तु भगवान् बुद्धो दशावतारेषु सादरं स्मर्यते । सर्वधर्मसमभावप्रयुक्ता एव "यं शैवाः समुपासते शिव इति' इत्यादयः सुभाषितश्लोकाः प्रावर्तन्त, संकल्पवाक्येषु च 'बौद्धावतारे' इति पदस्य समावेशः समजायत ।

शैवागमानामुत्पत्तिस्थलं मध्यदेश इति, शिवनामान्ताश्च शैवाचार्या बहवो राजगुरवः समभूवन्निति शास्त्रेभ्यः शिलाशासनेभ्यश्च ज्ञायते । व्योमशिवः प्रशस्तपादभाष्यटीकां व्योमवतीं जग्रन्थ। हन्त! तदेतच्छिवशासनं साम्प्रतं दक्षिणभारत एव कथञ्चित् प्राणिति । अत्रावधातव्यमधुना विद्वद्भिरुत्तरभारतीयैरपि प्रतिष्ठालक्षणसारसमुच्चयकारो वैरोचनः शिवाचार्यो वैक्रम्यां नवम्यां दशम्यां वा शताब्द्यामुत्तरभारत एव समजायत । परतन्त्रतावेलायां तदेष आगममार्गेण प्रवृत्तो वैचारिको विकासक्रमः समवरुद्धः साम्प्रतमस्माभिः पुनरुज्जीव-यितव्यः ।

तदेनां सर्वधर्मसमभाव-सर्वमानवसमभावात्मिकां शैवीं दृष्टिमवलम्ब्यास्माभिः साम्प्र-तिक्या दुःखव्याधिकलहनिमग्नायाः सम्पूर्णाया मानवजातेः कल्याणाय नूतनः कोऽपि पन्था निर्देष्टुं शक्यते। अत्र च शाक्तागमप्रतिपादितः समताष्टकमार्गोऽस्माकं साहायकमाचरिष्यति। समताष्टकमार्गः शक्तिसंगमतंत्रे (२।१८।२१) निर्दिश्यते, व्याख्यायते च तन्त्रालोकविवेकधृते (४।२७४-२७५) भट्टार्थमञ्जरीपरिमलस्मृते (पृ०१६८) च त्रिकशासनस्य तदेतस्मिन् वचने—

**समता सर्वभावानां वृत्तीनां चैव सर्वशः ।**
**समता सर्वदृष्टीनां द्रव्याणां चैव सर्वशः ॥**
**भूमिकानां च सर्वासामोवल्लीनां तथैव च ।**
**समता सर्वदेवानां वर्णानां चैव सर्वशः ॥**

**॥ इति शम् ॥**

# शाक्तागममीमांसा

**रघुनाथौ नमस्कृत्य गोपीनाथौ च मे गुरू।**
**नर्मदां मातरं नत्वा शाक्तागममुपाश्रये ।।**

## ऐतिहासिकं विवेचनम्

भूखननोपलब्धस्य प्रागैतिहासिकसंस्कृतिसूचकस्य वस्तुजातस्योपरि दृष्टिनिक्षेपे कृते एवं निश्चयो जायते यच्छैवागमपरम्परायाः सत्ताऽस्मात् कालात् पञ्चसहस्रवर्षपूर्वं 'हरप्पा-मोहें-जोदड़ो'-संस्कृतीनां समये आसीदिति। शैवागमप्रसङ्गे समुद्धृतं तदेतन्मतं शाक्तागमविषयेऽपि संगमयितुं शक्यते, शक्तिपूजासम्बन्धिनामुपादानानामपि तत्रोपलब्धेः। ऊर्ध्वमेढ्रा भगाङ्किताश्च मृण्मूर्तयः, प्रस्तरमूर्तयश्च भगवतः शिवस्य, तदवतारस्य लकुलीशस्य चोर्ध्वमेढ्राः समवलोक्यन्ते। "न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः। लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजाः ॥" (१४/२३३) इति च महाभारतेऽनुशासनपर्वणि श्रूयते। माहेश्वरपदमत्र शिवशक्त्योः सामरस्यं सूचयति, भगलिङ्गयोरुभयोरुपादानात्। श्रूयन्ते च शिश्नदेवा ऋग्वेदे[1]। अत्रापि शिश्नपदं भगस्याप्युपलक्षकम्[2]। सौत्रामण्यां सुरां पिबेत्,"[3] "न काञ्चन परिहरेत् तद् व्रतम्,"[4] यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपम्, तस्मात् तस्मान्न बीभत्सेत। अथ यदेतत् पुरुषे रेतो भवति आदित्यस्य तद्रूपम्, तस्मात् तस्मान्न बीभत्सेत" इत्यादीनि विधिवचांसि सुरापान-दूतीयाग-अर्घ्यनिष्पादनप्रभृतीन् शाक्तागमविधीन् समुपोद्वलयन्ति।" "अकारो वै सर्वा वाक्",[5] "अ इति ब्रह्म तत्रागतमहम्",[6] "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव। तस्यैतस्याकारो रसः"[7] इत्यादीनि च श्रुतिवचांसि शाक्तसम्प्रदायव्याख्यातस्यानुत्तराकारस्य मातृकायाश्च स्वरूपमुन्मीलयन्ति।

---

१. ऋग्वेदे, ७/२१/५; १०/९९/३ इति मन्त्रद्वयं द्रष्टव्यम्।
२. वचनमिदमुपलब्धे वैदिकवाङ्मयेऽन्वेषणीयम्। सौत्रामणीप्रसङ्गे सोमपानसुरापानशब्दाववश्यं दृश्येते।
३. छान्दोग्योपनिषदि, २/१३/२।
४. ऐतरेयारण्यके, २/३/७।
५. तत्रैव, २/३/६।
६. तत्रैव, २/३/८।
७. तत्रैव, ३/२/३।

[1]"अथ ये चान्ये ह वृथा कषायकुण्डलिनः कापालिनः" [2]"शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्,"[3] "अङ्गारधातुकषायत्रिदण्डमुण्डिककुण्डिकपालखट्वाङ्गधारणैश्च शुद्धिं प्रत्यवगच्छन्ति,"[4] "जारश्मशानसमुद्भवभूतिसुखस्पर्शस्वेदशीलाङ्गयाः । न समाप्यते नवकापालिक्या उद्धूलनारम्भः ॥" इत्येतानि मैत्र्युपनिषत्-याज्ञवल्क्यस्मृति-ललितविस्तर-मायासप्तशतीवचांसि कापालिकसम्प्रदायस्य प्राचीनतां द्योतयन्ति । अत्र कषायवस्त्रत्रिदण्डखट्वाङ्गधारणादयो भस्मोद्धूलनादयश्च पाशुपतसाधारणा विधयः । एतानि वचांसि लकुलीशप्रादुर्भावात् पूर्वमपि पाशुपतसत्तां महाभारतप्रतिपादितां साधयन्ति । पाशुपतशब्दो ह्यत्र परवर्तिनि काले प्रवृत्तानां सर्वेषामेव शैवसम्प्रदायानां प्रतीकभूतोऽभिप्रेतव्यः । कापालिकदीक्षायां स्त्रियोऽप्यभिषिक्ता भवन्ति स्मेति तु विशेषो गाथासप्तशतीवचनतो ज्ञायते । वराहमिहिरकृतबृहत्संहिताबृहज्जातकयोस्तट्टीकादिषु हर्षचरित-कादम्बरी-दशकुमारचरित-मालती-माधव-कथासरित्सागर-यशस्तिलकचम्पू-मत्तविलासप्रहसन-कर्पूरमञ्जरीसट्टक-नलचम्पू-प्रबोधचन्द्रोदयनाटकप्रभृतिषु वर्णितस्य कापालिकमतस्य यद्धि स्वरूपमुपलभ्यते तत् कुल-कौल-क्रम-मत-त्रिकादिमतेषु प्रतिपादितेन स्वरूपेण नातीव भिन्नम्[5] "शिवाम्बु रेतो रक्तं च नालाज्यं विश्वनिर्गमः" इति रत्नपञ्चकात्मकं कुण्डगोलकात्मकं च चरुद्रव्यं बौद्धेषु, शैवेषु, शाक्तेषु च कौलतन्त्रेषु कापालिकेषु च सममेवाद्रियते । एवं च डॉ० भाण्डारकरवर्णितानि शाक्तागमानां त्रीणि तत्त्वानि न केवलं तत्रैव, शैवेषु तन्त्रेष्वपि दृश्यन्ते । प्राचीनतमाभ्यामाभ्यां पाशुपतकापालिकमताभ्यां समेषामेषां शैवानां शाक्तानां च सम्प्रदायानां विकासः कथं नाम संजात इत्यधुनापि गवेषणाया विषयो वर्तते ।

[6]डॉ० भाण्डारकरमहोदयैः शाक्तः सम्प्रदायः प्रायोऽसामग्र्येण विवेचितः । न केवलमत्रैव अन्यत्रापि शाक्तमतस्य विवेचनं प्रायः परवर्तिनि काले प्रादुर्भूतान् ग्रन्थानाधृत्यैव कृतमिति प्रतीयते । शिवदृष्टिकारेण सोमानन्देन तृतीयाह्निकारम्भे शक्तिपारम्यपक्षः प्रतिक्षिप्तः । तदेतन्मतं पूर्वपक्षरूपेणोपस्थापयता तद्वृत्तिकारेण भट्टोत्पलेन प्रद्युम्नभट्टरचितस्य तत्त्वगर्भस्तोत्रस्यैष श्लोक[7] उपस्थापितः—

**यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया ।**
**व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ॥ इति ।**

---

१. मैत्र्युपनिषदि आनन्दाश्रमसंस्करणे, ७/८ ।
२. याज्ञवल्क्यस्मृतौ, पृ० २४३ ।
३. ललितविस्तरे पी० एल० वैद्यसंस्करणे, पृ० १८३ ।
४. गाथासप्तशत्यां निर्णयसागरसंस्करणे, गा० ४०८ ।
५. तन्त्रालोकविवेके, २९/२०० ।
६. "वैष्णविज्म, शैविज्म एण्ड अदर माइनर रिलीजियस् सिस्टम्स्" इत्याख्ये ग्रन्थे ।
७. "भट्टप्रद्युम्नेन तत्त्वगर्भे" (शि० वृ०, पृ० १६) इति भट्टोत्पलोक्त्या ज्ञायते श्लोकोऽयं भट्टप्रद्युम्नरचितस्य तत्त्वगर्भस्येति । एष श्लोकोऽन्ये च केचन श्लोकास्तत्त्वगर्भस्या रामकण्ठकृतस्पन्दकारिकाविवृतौ (पृ० १२९-१३३) दृश्यन्ते । ते च लुप्तागमसंग्रहद्वितीयभागेऽस्माभिः संगृहीताः ।

तदेतस्याः शाक्ताया अद्वयदृष्टेस्तदीयप्राचीनवाङमयस्य च स्वरूपमभिनवगुप्तकृते तन्त्रालोके जयरथकृतायां तट्टीकायां च स्थाने स्थानेऽवलोकयितुं शक्यते। प्रत्यभिज्ञादर्शनं शैव्याः शाक्तायाश्च दृष्टेः समन्वयमुखेनैव प्रादुर्भूतमिति वक्तुं शक्यते।

नित्याषोडशिकार्णवस्य उपोद्घातेऽस्माभिः पूर्वादिस्रोतोभेदेन, अनुस्रोतोभेदेन, आम्नाय-भेदेन, पीठभेदेन, द्वैत-द्वैताद्वैत-अद्वैतभेदेन च भिन्नानां सिद्धान्तगारुड-भूततन्त्र-वाम-दक्षिण-भैरव-काराल-पाशुपत-लाकुल-विष्णुतन्त्र--पाञ्चरात्र--बौद्धतन्त्रदिक्पालदर्शन—आर्हत--सोम--यामल-एकवीर-नवक-समभेद-देव्याख्य-विन्ध्यवासिनी-चण्डिका--दुर्गा--आक--गाणपत्य-इन्दुसम्भव-कुल-कौल-क्रम-मत-त्रिकादिशास्त्राणाम्, मान्त्रेश्वर-दिव्य-आर्ष-गौह्यक-योगिनीकौल-सिद्धकौला-दीनामनुस्रोतसाम्, विद्यापीठ-मन्त्रपीठ-मुद्रापीठ-मण्डलपीठान्तर्गतानां च तन्त्राणां परिचयो-ऽजितागम-कामिकागम-पूर्वकारणागम-नेत्रतन्त्र-मृगेन्द्रागम-ब्रह्मयामलादि-प्रामाण्येन समुपस्था-पितः। देशकाल-आम्नाय-विद्या-दर्शन-आयतन-आगमाख्येषु पर्यायसप्तकेषु तन्त्र-उपतन्त्र-संहिता-चूडामणि-अर्णव-डामर-यामल--सूक्त-कक्षपुटी-विमर्शिनी-कल्प-कल्पलता--चिन्तामणि-उड्डालक-उड्डीश-अवतार-बोध-कल्पद्रुम-कामधेनु-सद्भाव-तत्त्व-क्रम-अमृत-तर्पण-दर्पण-सागरादिप्रविभाग-भिन्नानां परःसहस्राणां तन्त्राणामुल्लेखश्च शक्तिसंगमतन्त्रसमुपदिष्टस्तत्रत्ये छिन्नमस्ताख्य चतुर्थखण्डीये उपोद्घातेऽस्मदीये द्रष्टव्यः।

> सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्।
> वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम्॥
> दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम्।
> सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि॥ (२।७-८)

इति कुलार्णववचने,

> वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
> ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥ (पृ० ९२)

इति परात्रिंशिकाव्याख्योद्धृतवचने च तेषां प्रमाणतारतम्यं श्रूयते। तदेतदेकप्रकृतिकं विशालं शैवं शाक्तं च वाङमयं कदा कथं च प्रसृतिं लेभे इति परीक्षणीयम्।

तदेनं प्रश्नं नैव साधुतया समादधत्यैतिहासिकाः[1]। इदमवधेयमत्र यदधुनैव[2] मथुरानगरस्थे पुरातत्त्वसंग्रहालये प्रायः २३०० वर्षप्राचीना मौर्य-शुङ्गकालीना यक्षीप्रतिमा (मनसादेव्याः)

---

१. डॉ० भाण्डारकर-बुडरफ-बागची-भट्टाचार्यप्रभृतीनां मतान्यस्मदीये "आगम आणि तन्त्रशास्त्र" शीर्षके मराठी निबन्धे "प्राचीन भारतीय विद्येचे पुनर्दर्शन" इत्याख्ये ग्रन्थे पुण्यपत्तनीयवेदशास्त्रोत्तेजकसभा-प्रकाशिते समालोचितानि।

२. 'आज' वाराणसी, दि० ५-२-७२ इत्यत्र विवरणमस्य द्रष्टव्यम्।

संगृहीता मथुरानगरं निकषा वर्तमाने 'झांग का नगला' इत्याख्ये स्थाने समुपलब्धा। महाभारते भगवत्यां दुर्गायाः स्तोत्रद्वयमुपलभ्यते—प्रथमं विराटपर्वणि (६ अध्याये), द्वितीयं च भीष्मपर्वणि (२३ अध्याये)। स्तोत्रद्वयमपि प्रक्षिप्तमित्यामनन्ति[1] इतिहासज्ञाः। किन्तु महाभारतीये भाण्डारकरशोधसंस्थानसंस्करणेऽपि[2] श्रीपर्वत-शाकम्भरी-धूमावतीप्रभृतिशब्दानामुपस्थितिर्नूनं तदा शैवानां शाक्तानां च सम्प्रदायानां सत्तां साधयत्येव। हरिवंशे विष्णुपर्वणस्तृतीयेऽध्याये दृश्यते आर्यास्तवः, यत्र देवी "शबरैर्बर्बरैश्चैव पुलिन्दैश्च सुपूजिता" (३/१७) इति "विन्ध्यवासिन्यभिश्रुता" (३/८) इति च वर्ण्यते उदयपुरनगरस्थे पुरातत्त्वसंग्रहालये संरक्षितस्य ४६० ई० वर्षे समुत्कीर्णस्य पूर्वमुदयपुरमण्डलान्तर्गते 'छोटी सादड़ी'—स्थानसमीपवर्तिनि गिरौ भ्रमराम्बा (भंवर माता) मंदिरस्य गर्भगृहे स्थापितस्य [3]शिलाशासनस्य वर्ततेऽयमाद्यः श्लोकः —

> **देवी जयत्यसुरदारणतीक्ष्णशूला**
> **प्रोद्गीर्णरत्नमकुटांशुचलप्रवाहा।**
> **सिंहोग्रयुक्तरथमास्थितचण्डवेगा**
> **भ्रूभङ्गदृष्टिविनिपातनिविष्टरोषा॥ इति।**

वैरोचनीये प्रतिष्ठालक्षणसारसंग्रहे सिद्धान्तशैव-गारुड-भूत-वाम-दक्षिणतन्त्राणां चतुष्षष्ट्युत्तरशतसंख्याकानाम्, तन्त्रालोकविवेकधृतश्रीकण्ठ्यां संहितायाम्, नित्याषोडशिकार्णवे च परस्परं भिन्नानां प्राचीनानां चतुष्षष्टितंन्त्राणां नामावली श्रूयते[4]। डॉ० प्रबोधचन्द्रवागचीविवृते[5] कम्बुजशिलालेखे विन्यस्तानां शिरश्छेद-वीणाशिख-संमोह-नयोत्तराख्यानां चतुर्णामपि तन्त्राणां नामान्यत्रैव समुपलभ्यन्ते। अपरा च नामावली वर्तते नूतना सर्वोल्लासतंत्रे तोडलतन्त्रानुसारिणी। एताभ्यो विलक्षणा च दृश्यते विष्णुक्रान्ता-रथक्रान्ता-अश्वक्रान्ताविभागेषु विभक्तानां चतुष्षष्टितन्त्राणां त्रिविधा नामावली महासिद्धसारतन्त्रस्था। विशालतमस्यास्य समानप्रकृतिकस्य विलक्षणस्य च शैवस्य शाक्तस्य च वाङ्मयस्य सहस्राधिका मातृकाः समुपलभ्यन्ते।

---

१. "हिस्ट्री आफ धर्मशास्त्र" इत्यस्य हिन्दीसंस्करणम्, भा० ५, पृ० १२।

२. श्रीपर्वते महादेवो देव्या सह महाद्युतिः" (वन० ८३/१७), "ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम्। शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता॥" (वन० ८२/११), "धूमावतीं ततो गच्छेत्" (वन० ८०/२०) इति।

३. शिलाशासनस्यास्य परिचयः "एपिग्राफिया इण्डिका" पत्रिकायां ३० वर्षीये चतुर्थेऽङ्के १२०-१२७ पृष्ठेषु प्राप्तव्यः।

४. नित्याषोडशिकार्णवस्य उपोद्धाते संस्कृतविश्वविद्यालयप्रकाशिते, पृ० २३-३१ विवरणमस्य द्रष्टव्यम्। विषय एष लुप्तागमसंग्रहद्वितीयभागस्य उपोद्धातेऽपि परीक्षिष्यते।

५. तदीयः "स्टडीज इन दी तन्त्राज्" (पृ० १-२) इत्याख्यो ग्रन्थो द्रष्टव्यः। अस्य कालस्तत्र न निर्दिष्टः, किन्तु ६७४ शकसंवत्सरीय (ई० १०५२) एष इत्यत्र प्रमाणान्युपलभ्यन्ते। तत्रेदं निर्दिश्यते यत् ७२४ शके संवत्सरे (ई० ८०२) जयवर्मद्वितीयराज्यकाले हिरण्यदाम्ना शिवकैवल्याय तन्त्राणीमान्युपदिष्टानीति।

तास्वभिनवगुप्तपूर्ववर्तिनां ग्रन्थानां प्रकाशनं नूनं नैव बाहुल्येन जातम् । परवर्तिन एव ग्रन्थाः प्रायः प्रकाशिता इति तदाधारेण कृतं शाक्तमतस्यानुशीलनं नैव याथातथ्यं प्रकटयितुमलम् । परवर्तिनि काले प्रादुर्भूते तान्त्रिके वाङ्मये दार्शनिकसिद्धान्तानां योगविधीनां चापेक्षया दारुणस्य षट्कर्मबहुलस्य बाह्यक्रियाकाण्डस्य विस्तर एव स हेतुर्येन वैदिककर्मकाण्डमिव तान्त्रिकं कर्मकाण्डमपि हेयमिवोपेक्षितमिव संजातम् ।

प्राचीनानां तन्त्राणामुपलब्धिसमनुकालमेव विविधशाखाप्रशाखाविभक्तानामेषां तन्त्राणामाविर्भावकालविषये किमप्युच्येत । साम्प्रतं किल नैव वक्तुं शक्यते यदेतेषां सर्वेषामाविर्भावकालः समान एवेति । यावदुपलब्धानां प्राचीनतन्त्रग्रन्थानामवलोकनेन तन्त्राणामेषां स्वरूपं वैष्णवशैवागमापेक्षया किमपि विलक्षणमिव प्रतिभाति । किन्तु तत्र तेषां कामात्मकानां तत्त्वानां समावेशो नास्ति, येन किल कारणेन तन्त्रशास्त्रं कैश्चित् पाश्चात्यविद्वद्भिभर्त्सनापदवीमानीयते । अर्थात् कौलतन्त्रेभ्यो विलक्षणं स्वरूपमस्य वाङ्मयस्य स्पष्टं प्रतीयते । परिष्कृतायां च भाषायां निबद्धान्येतानि ।

आगमिकस्य तान्त्रिकस्य चोपासनविधेर्लक्ष्यं भोगो मोक्षश्चेत्युभयमपि भवति । भोगशब्दोऽत्र ऐहिकविषयोपभोगमुपलक्षयति, न पारलौकिकम् ।[1] इहैकभविको मोक्ष इति हि किल उद्घोषो वर्तते आगमिकानाम् ।[2] "रुरुसिद्धान्तसंसिद्धौ भोगमोक्षौ ससाधनौ",[3] "शिवापदाम्भोजयुगार्चकानां भुक्तिश्च मुक्तिश्च करस्थितैव" उभे अपीमे भोगमोक्षप्रतिपादके वाक्ये, तथाप्यागमिको भोगशब्दः किल ऐहिकं सामान्यमैश्वर्यं[4] बोधयति, शाक्ततन्त्रेषु च प्रयुक्तो भोगशब्दः सम्भोगार्थको भवति । अत एव केचनाधुनिकाः सम्भोगतः समाधिं साधयन्ति । तन्त्रशास्त्रस्यानया शाखया किल सम्पूर्णं तन्त्रशास्त्रं समालोच्यतां गतम् । भोगशब्दार्थे परिवर्तनमेतत् कथं नाम समजायत ? प्रश्नस्यास्य समाधानं कठिनमिव प्रतीयते । उपादानानि तादृशानि प्रथमतो बौद्धतन्त्रेषु प्रविष्टानि, लोकप्रियाणि च संजातानीति शाक्तागमेष्वपि तानि[5] प्रचारमलभन्तेति केचन विद्वांसः प्रतिपादयन्ति । तन्त्रशास्त्रस्येयं विशिष्टा पद्धतिः कुलाचार इति वामाचार इति वा नाम्ना प्रसिद्ध्यति । अस्यां शाखायामुपादानानीमानि कदा कस्यां परिस्थितौ प्रविष्टानीति विषयः साम्प्रतं गवेषणाया वर्तते ।

---

१. अवधूतसिद्धस्य भक्तिस्तोत्रीयः ३० श्लोकः, महार्थमञ्जरीपरिमले (पृ० १४५) समुद्धृतं शिवधर्मवचनम्, योगराजकृतपरमार्थसारव्याख्याधृतं शिवधर्मोत्तरवचनं चात्र द्रष्टव्यम् ।

२. अष्टप्रकरणान्तर्गतसद्योज्योतिकृतभोगकारिकाया रामकण्ठकृता व्याख्या द्रष्टव्या (देवकोट्टैसंस्करणम् पृ० १) ।

३. सौन्दर्यलहरीटीकायां सौभाग्यवर्धिन्यामुद्धृतमशेषकुललहरीवचनमेतत् (पृ० २२) ।

४. "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" (१/१/२) इति वैशेषिकोक्तधर्मलक्षणेन तुलनीयमेतत् ।

५. धर्मशास्त्र०, भा० ५, पृ० ३७ इत्यत्र प्रतिपादितमेतत् ।

वैरोचनीये प्रतिष्ठालक्षणसारसमुच्चये शिवस्य पञ्चवक्त्रेभ्यो विनिःसृतानां पञ्चविधानां शैवागमानां विधिविशेषस्वरूपमेवं वर्ण्यते—

सिद्धान्ते चतुर्वर्णान्नभोजनं गारुडे विषम् ।
एकत्रभोजनं घोरे वामे वामामृतं तथा ॥
भूततन्त्रे शवस्पर्शः पञ्चस्रोतसस्त्वयं विधिः । (२/१३१-१३२) इति ।

अत्र वर्णितानां वामतन्त्राणां तन्त्रालोकादिषु च वर्णितानां कुलकौलभैरवतन्त्राणां साम्यवैषम्यविषयेऽधुना किमपि वक्तुं न शक्यते, किन्तु मृगेन्द्रवृत्तिदीपिकायामघोरशिवाचार्यो वक्ति[1]—"हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेद-सांख्य-कौलादितन्त्राणाम्" इति । अनेन कौलमार्गस्य प्रवर्तकः प्रथम आचार्यो मत्स्येन्द्र इति सिद्धयति । तन्त्रालोककारोऽभिनवगुप्तो ग्रन्थारम्भश्लोकेषु मच्छन्दविभुं स्तौति । तद्व्याख्याकारो जयरथोऽपि—"सकलकुलशास्त्रावतारकतया प्रसिद्धः··· मच्छन्दः" (भा० १, पृ. २५) इति वदन् तमेव विषयं पोषयति ।

ईशवीयनवमशताब्दीसमाप्तौ दशमशताब्दीप्रारम्भकाले वा मत्स्येन्द्रनाथः समजायतेत्याधुनिका इतिहासज्ञा वदन्ति । सप्तमी शताब्दी तस्याविर्भावकाल इति डॉ० शाहिदुल्लानिर्णयो भ्रमभरित इति ते कथयन्ति ।[2] डॉ० कान्तिचन्द्रपाण्डेयमहोदयस्तु मत्स्येन्द्रनाथस्य शिष्यपरम्पराप्रामाण्येन पञ्चमी षष्ठी वा शताब्दी तस्य समय इति साधयति । अत्र वर्णितायां मत्स्येन्द्रनाथशिष्यपरम्परायां गोरक्षनाथस्य नाम न कुत्रापि दृश्यते । द्वादशशताब्दीं यावन्निर्मितेषु संस्कृतग्रन्थेषु कुत्रापि गोरक्षस्य नाम नोल्लिख्यते, न च कुत्रापि वर्णितो दृश्यतेऽनयोर्गुरुशिष्यभावः । मत्स्येन्द्रनाथो नाथसम्प्रदायस्य प्रवर्तकस्तस्य प्रधानशिष्यश्च गोरक्षनाथ इति प्रवाद एव प्रेरयत्यैतिहासिकान् मत्स्येन्द्रनाथं परवर्तिनं साधयितुम् ।

कौलज्ञाननिर्णयप्रभृतिग्रन्थानां मातृका प्राचीना यदि डॉ० प्रबोधचन्द्रबागचीमहोदयेन नोपलब्धा स्यात्, अभिनवगुप्तेन च मच्छन्दस्योल्लेखो न कृतः स्यात्, तर्हि तस्य समय इतोऽपि परवर्ती साध्येत तैरितिहासज्ञैः । ते हि महार्थमञ्जरीकारं महेश्वरानन्दं गोरक्ष मन्वते, अत्र च ते "गोरक्षो लोकधिया" इति तस्यैव वचनं प्रमाणयन्ति । सत्यमिदम्, किन्तु तस्य गुरुर्महाप्रकाशः, शिवानन्दश्च परमगुरुरिति स तत्रैव निर्दिशति । नहि स कुत्रापि मत्स्येन्द्रनाथशिष्यत्वेनात्मानं ख्यापयति । महेश्वरानन्दस्य परमगुरोः शिवानन्दस्य ऋजुविमर्शिनीप्रभृतीन् ग्रन्थान् सम्पादयद्भिरस्माभिः शिवानन्दस्य समयस्त्रयोदशी[3] शताब्दीति सप्रमाणं साधितम् । एवं च शिवानन्दप्रशिष्यस्य गोरक्षापरनामधेयस्य महेश्वरानन्दस्य मत्स्येन्द्रनाथशिष्यत्वं मरुमरीचिकायितमेव ।

१. देवकोट्टैनगरतः प्रकाशितोऽयं ग्रन्थः । तत्र पृ० ७४ वचनमेतद्वर्तते ।
२. क "अभिनवगुप्त : एन हिस्टोरिकल एण्ड फिलासफिकल स्टडी" इत्याख्ये ग्रन्थे वाराणसीतः प्रकाशिते, पृ० ५४६ इत्यत्र प्रतिपादितमेतत् ।
ख नित्याषोडशिकार्णवस्य उपोद्घाते (पृ० १८) द्रष्टव्यमेतत् ।

डॉ० प्रबोधचन्द्रबागचीमहोदयः कौलज्ञाननिर्णयप्रभृतीन् ग्रन्थान् मत्स्येन्द्रनाथकृतित्वेन ख्यापयति, किन्तु कौलज्ञाननिर्णय एव पञ्चपञ्चाशिका-कुलपञ्चाशिका-कुलसागर-भैर वोद्यान-चन्द्रकौल-सिद्धामृत-ऊर्मिकौल-कौलसद्भावप्रभृतयो ग्रन्थाः स्मर्यन्ते। ग्रन्थाश्चेमे तन्त्रालोके तट्टीकायां च जयरथकृतायामुल्लिख्यन्ते। वस्तुतः पूर्वोक्तैः प्रमाणैः सकलकुलशास्त्रावतारको मत्स्येन्द्र इति कृत्वा कौलज्ञाननिर्णयप्रभृतिग्रन्थानामप्यवतारकः स एव स्वीक्रियतां नाम, किन्तु तत्तद्ग्रन्थमातृकालिपिकालमनुरुद्ध्य नैव मत्स्येन्द्रनाथसमयो निर्धारयितुमुचितः। अभिनवगुप्ततः पूर्वमाविर्भूतानां कुलकौलाचार्याणां बहुकालव्यापिनी परम्परा नैवोपेक्षितुं क्षमा। परात्रिंशिकाशास्त्रं[1] सद्यः कौलिकसिद्धिदमभिप्रेयते। शास्त्रं चेदं न केवलं सोमानन्देन,[2] भवभूत्यादिभिरपि व्याख्यातमिति श्रूयते।[3] मृगेन्द्रागमे सिद्धान्तशैवीयेऽपि सिद्धकौल-योगिनीकौलाख्यौ सम्प्रदायौ चर्चितौ।

अत एव डॉ० कान्तिचन्द्रपाण्डेयो मत्स्येन्द्रनाथस्याविर्भावकाल ईशवीया पञ्चमी शताब्दीति मन्यते। तस्मिन्नेव काले कामरूपक्षेत्रे तेन कौलज्ञानमुपदिष्टम्। तन्त्रालोककाराभिनवगुप्तप्रामाण्येन कामरूपतीर्थमिदमर्धमठिकात्वेन[4] प्रसिद्धं त्र्यम्बकदुहितुरधिकारक्षेत्रे समापतति।[5] आर्यमञ्जुश्रीमूलकल्पे बौद्धमहायानसूत्रग्रन्थे शैववैष्णवगारुडादितन्त्राणामुल्लेखो वर्तते, न शाक्तकुलतन्त्राणाम्। गुह्यसमाजतन्त्रं च स्पष्टतः कुलतन्त्रं भवति। अस्याविर्भावकालः षष्ठी सप्तमी वा शताब्दी मन्यते। एवं च मत्स्येन्द्रनाथावतारानन्तरमेवास्य तन्त्रस्याविर्भावः सञ्जात इति निश्चप्रचम्।

मत्स्येन्द्रनाथेन हि स्वोपज्ञातं ज्ञानं षट्सु राजपुत्रेषु[6] वितीर्णम्। षण्णामेषां राजपुत्राणां परम्परा ओवल्लीनाम्ना प्रसिद्ध्यति। ताश्च—"आनन्दावलिबोधिप्रभुपादान्ताश्च योगिशब्दान्ताः। एता ओवल्ल्यः स्युः" (२९/३६) इत्येवं तन्त्रालोके प्रदर्श्यन्ते। अत्र आनन्दयोगिशब्दौ शैवशाक्तपरम्परायाम्, बोधि-प्रभु-पादशब्दाश्च बौद्धपरम्परायां श्रूयन्ते। भारतीये वाङ्मये चतुरशीतिसिद्धानां नामावली प्रसिद्धा। सर्वेषां वर्णानां धर्माणां च प्रातिनिध्यमाचरन्त उत्कृष्टाः

---

१. तत्रत्यः प्रथमः श्लोकस्तद्व्याख्यानं चाभिनवगुप्तकृतं द्रष्टव्यम्।

२. "श्रीसोमानन्दकल्याणभवभूतिपुरोगमाः" (१३/१४९) इति तन्त्रालोकवचनत एतद् विज्ञायते। धनेश्वरशर्माऽपि तद्व्याख्यातेति लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घाते प्रकाशयिष्यमाणे ग्रन्थग्रन्थकारपरिचयप्रकरणे द्रष्टव्यम्।

३. मृगेन्द्रागमे चर्यापादे (१/४०) अवलोक्यतामेतत्।

४. "आद्यस्य चान्वयो जज्ञे द्वितीयो दुहितृक्रमात्। स चार्धत्र्यम्बकाभिख्यः सन्तानः सुप्रतिष्ठितः॥" (३६/१३) इति तन्त्रालोकवचनमत्र द्रष्टव्यम्। तत्रत्यमेव (३७/६१) वचनमिदमप्यवलोकनीयम्।

५. ग्रन्थस्यास्य दरभंगानगरतः १९६४ ई० वर्षे प्रकाशितं संस्करणं (पृ० २३-२४) द्रष्टव्यम्।

६. तन्त्रयात्रायां मुद्रितः "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" इत्याख्योऽस्मदीयो निबन्ध (पृ० ६५) द्रष्टव्यः।

७. "सिद्ध और सहजयान" इति शीर्षके हिन्दीनिबन्धे विषयोऽयं विवृतोऽस्माभिः।

साधका अत्र संनिविष्टाः। षष्ठयां शताब्द्यां बौद्धधर्मे किमपि विलक्षणं परिवर्तनं समजायतेत्यैतिहासिका निश्चिन्वन्ति। तदा मत्स्येन्द्रनाथोपज्ञस्य कुलविधेरस्य तत्र प्रवेश एव तत्कारणं स्यात्।

इदमत्रावधेयम्—यथा हि वेदशास्त्राणामध्ययनं गुरुशिष्यपरम्परयाऽनादिकालात् प्रवर्तते वर्णाश्रमधर्ममनुरुद्धय, तथैव "प्रसिद्धिरागमो लोके" [1]इति नीत्या आगमशास्त्रमप्यनादिकालाल्लोकेषु प्रावर्तत। समये समये तत्रत्या वैदिकवर्णाश्रमधर्माविरोधिनोंऽशा इतिहास-पुराण-स्मृत्यादिपरम्परास्वङ्गीकृताः, तत्र स्त्रीणां शूद्राणां चाधिकारः स्वीकृतः। आगमेषु तन्त्रेषु च वेदाविरोधिनस्तद्विरोधिनश्चेति द्विविधो विभागः श्रूयते । तत्र वेदाविरोधिषु तन्त्रागमेषु सच्छूद्राणामेवाधिकारः स्वीक्रियते। वेदाविरोधिषु च दीक्षयेत् श्वपचानपीति रीत्या मानवमात्रस्याधिकारो मन्यते। किरात-पुलिन्द-बर्बर-शबरप्रभृतयो वनवासिनो जना नानानामरूपधरां देवीमाराधयन्ति स्मेति हरिवंशादिषु श्रूयते[2]। "यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः" इति च रामायणे महापुरुषो भगवान् रामः प्राह। एवं च ते जनजातीया मैरेयमांसादिभिः स्वेष्टदेवतां समाराधयेयुरित्यत्र न किमपि वैचित्र्यं वैचित्त्यं वा। कापालिकानां स्वरूपं पूर्वमुपवर्णितम्, तत्र स्त्रियोऽपि दीक्षिता भवन्ति स्मेति च। बौद्धधर्मेऽपि च तथा। लकुलीशपाशुपतानां [3]शृङ्गारणं शृणुमः। "घृतकुम्भसमानारी तप्ताङ्गारसमः पुमान्" [4]इति च कश्चिदवदत्। मत्स्येन्द्रनाथप्रवर्तिते कौलागमे सर्वेषामेषामुपादानानां समाहार इव दृश्यते। अत्रत्यानि चोपादानानि परवर्तिषु शैवेषु शाक्तेषु बौद्धेषु च तन्त्रेषु प्रसृतिं लेभिरे।

तदेतस्मिन् तान्त्रिके वाङ्मयेऽत्युन्नतास्वाध्यात्मिकीषु भूमिकासु स्थितानां स्थितप्रज्ञानां महामानवानां सममेव पशुप्रायाणामुच्छृङ्खलानामज्ञानां च मानवानामाध्यात्मिकविकासाय योग्यतानुरूपो रुच्यनुसारी पन्थाः समुपलभ्येत। महार्थमञ्जरीकारमहेश्वरानन्दप्रभृतिभिर्योगिभिर्जात्यादिदुराग्रहा[5] आगमवचनप्रामाण्येन पाशत्वेनाभिमताः, भगवत्पादानां शङ्कराचार्याणां [6]ब्रह्माद्वैतवादतोऽप्यत्युत्कृष्टमागमीयं तान्त्रिकं च दर्शनमिति च सप्रमाणं साधितम्। तान्त्रिके हि दर्शने जगदेतन्न मिथ्या, ब्रह्म च नानिर्वचनीयया माययाऽपि तु कर्तुमकर्तुमन्यथाकर्तुमुद्युक्तया स्वाभाविक्या स्वस्वरूपभूतया शक्त्या समुपेतमित्यङ्गीक्रियते।

---

१. तन्त्रालोकस्तत्रत्यो विवेकश्च द्रष्टव्यः (३५/२)।

२. अयोध्याकाण्डे (१०३/३०) द्रष्टव्यमेतत्।

३. "प्रेतवच्चरेत्, क्राथेत वा, स्पन्देत वा,···शृङ्गारेत वा" (३/११-१५) इतीमानि पाशुपतसूत्राणि तद्भाष्यं चावलोक्यताम्।

४. "तस्माद् घृतं च वह्निं च नैकत्र स्थापयेद् बुधः" इत्युत्तरार्धेन सह सुभाषितसंग्रहेषु श्लोकोऽयं दृश्यते।

५. महार्थमञ्जरीपरिमले, पृ० १४५ (वाराणसेयसंस्कृतविश्वविद्यालयसंस्करणे)।

६. तत्रैव १३० पृष्ठमवलोकनीयम्।

## शाक्तागमव्यापृतिः

दक्ष (भैरव) वामतन्त्रे प्राधान्येन शाक्तेन सम्प्रदायेन संबद्धयेते इत्यस्माभिः शैवागम-मीमांसायमुक्तमासीत् । ताविमौ दक्षवामशब्दौ न साम्प्रतं प्रचलितौ दक्षिणाचारवामाचारौ समयाचारकुलाचारौ वा सूचयतः, किन्तु "शिवस्य दक्षवामवक्त्राभ्यां दक्षिणोत्तरदिगुन्मुखाभ्यां विनिःसृतौ भैरवशाक्तागमौ सङ्केतयतः ।" इयं (त्रिपुरा) च विद्या चतुराम्नायसाधारण्यपि दक्षिणपक्षपातिनी" (पृ० ४१) इत्यर्थरत्नावलीकारविद्यानन्दप्रामाण्येन त्रिपुरासम्प्रदायस्य भैरवागमानुवर्तित्वं ख्याप्यते , महेश्वरानन्दश्च महार्थमञ्जरीकारः क्रमदर्शनमौत्तराम्नायपदेन निर्दिशति । भैरवागमा भगवता भैरवेणोपदिश्यन्ते, क्रमागमानां चोपदेष्ट्री भवति भैरवी काल-सङ्कर्षिणी । शक्तिपारम्यपक्षोऽत्रैव समुपस्थाप्यत इति भवत्येतत् क्रमदर्शनं शुद्धं शाक्तं दर्शनम् । "परो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन" (नि० षो० ४/६), "शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते" (नि० षो० ४/७) इति वदत् त्रैपुरं दर्शनमपि शक्तिपारम्यपक्षमेवाङ्गी-करोति । स्पन्दकारिकाव्याख्यातारः कल्लटादयः काश्मीरा अपि शक्तिपारम्यवादिनः, यथा हि भट्टप्रद्युम्नकृततत्त्वगर्भश्लोकोद्धरणमुखेन पूर्वं प्रतिपादितम् । शिवसूत्रशिवदृष्टिमुखेन प्रवृत्तं काश्मीरं त्रिकदर्शनं प्रत्यभिज्ञादर्शनं वा यद्यपि शिवपारम्यवादं पोषयति, तथापि प्रकाशविमर्शा-त्मकं शिवशक्तिसामरस्यात्मकमेकमेवाद्वयतत्त्वं तत्राङ्गीक्रियते त्रिकदर्शनेऽस्मिन् द्वैतागमा द्वैता-द्वैतागमाश्चाणवोपायत्वेन, क्रमदर्शनं शाक्तोपायत्वेन, कुलदर्शनं च शाम्भवोपायत्वेन संगृह्यते । त्रिकदर्शनं प्रत्यभिज्ञादर्शनं वा तत्रानुपायत्वेन व्याख्यायते । तत्र द्वैताद्वैतानां च परिचयः शैवागम-मीमांसायामुपस्थापितः । दशमहाविद्याप्रतिपादकं विशेषतस्त्रिपुरा-काली-तारोपासनाविधायकं वाङ्मयं सुविपुलमास्ते । तदत्र केवलं त्रिपुरा-क्रम-कुल-त्रिकागमानां संक्षिप्ततरं परिचयमुपस्थाप्य तदनु उपायचतुष्टयमेतद् व्याख्यायते ।

## शाक्तागमवाङ्मयम्

चतुर्विधानामप्येषां शाक्तागमानां तदनुवर्तिनां शैवागमानां चाद्वयवादिनां स्वरूपम्, तत्प्रतिपादकानां ग्रन्थानां ग्रन्थकाराणां चापि वैशिष्ट्यं महता प्रयासेन डॉ. कान्तिचन्द्रपाण्डेय-महोदयैः स्वकीये "अभिनवगुप्तः एन हिस्टोरिकल एण्ड फिलासफिकल स्टडी" इत्याख्ये आङ्ग्लभाषामये, नातिविस्तरेण च शैवदर्शनबिन्दुसमाख्ये संस्कृतभाषाग्रथिते ग्रन्थे निर्दिष्टम् । त्रिपुरातन्त्राणामत्र कौलतन्त्रेष्वेवान्तर्भावः प्रदर्शितः । अनया: सर्वास्त्रुटीः परिमार्ज्य त्रिपुरा-तन्त्राणां स्वतन्त्रं स्वरूपमस्माभिः "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" इत्याख्येऽन्येषु च केषुचिन्निबन्धेषु तन्त्रयात्रायां[1] पुनः प्रकाशयिष्यमाणेषु, नित्याषोडशिकार्णवस्य शक्तिसंगम-तन्त्रचतुर्थभागस्य उपोद्घातयोश्च समुपस्थापितम् । क्रमागमग्रन्थानां ग्रन्थकाराणां तदन्तर्वर्तिनां सम्प्रदायानां च कालनिर्णयादिपुरःसरं महतोत्साहेन कृतः स्वरूपनिर्णयो डॉ. नवजीवनरस्तोगीकृते

१. अस्मदीयानां संस्कृतभाषानिबद्धानां विशिष्टानां निबन्धानां संग्रहात्मक एष ग्रन्थ उत्तरप्रदेश-संस्कृत-अकादमीसंस्थाप्रदत्तार्थिकसाहाय्येन मुद्राप्यते ।

"क्रम तान्त्रिसिज्म आफ काश्मीर" इत्याख्ये ग्रन्थे द्रष्टव्यः। अस्माभिरपि कुल-क्रम-मत-त्रिकादिविविधागमीयग्रन्थानां ग्रन्थकाराणां च स्वरूपपरिचयाय लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घाते प्रयत्यते। श्रद्धास्पदैर्गुरुचरणैः कविराजमहोदयैः संगृहीते प्रथमे भागे, अस्माभिश्च संगृहीते द्वितीये भागे परःशतानां क्रम-कुल-मत-त्रिकादितन्त्राणां मातृकारूपेणोपलब्धानामनुपलब्धानां च वचांसि संगृहीतानि। विस्तृतेयं नामावली। पिष्टपेषणं मा भूदिति धिया नात्र सा प्रस्तूयते। तन्त्ररसिकैर्जिज्ञासुभिरुपर्युक्तेषु ग्रन्थेषु, सत्वरमेव सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयतः प्रकाशयिष्यमाणे लुप्तागमसंग्रहद्वितीयभागस्यपोद्घाते च सर्वमेतद् द्रष्टव्यम्।

## उपायचतुष्टयम्

"दशाष्टादशवस्वष्टभिन्नं यच्छासनं विभोः। तन्सारं त्रिकशास्त्रं हि तत्सारं मालिनीमतम्॥" (१/१८) इति तन्त्रालोकेऽभिनवगुप्तो वक्ति। मालिनीमते च—"उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः। यो भवेत् स समावेशः सम्यगाणव उच्यते॥ उच्चाररहितं वस्तु चेतसैव विचिन्तयन्। यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते॥ अकिञ्चिच्चिन्तनस्यैव गुरुणा प्रतिबोधतः। जायते यः समावेशः शाम्भवोऽसावुदाहृतः।" (२/२१-२३) इत्येवं समावेशमुखेन आणव-शाक्त-शाम्भवोपायानां स्वरूपं निर्दिष्टम्। सोऽयं विषयस्तन्त्रालोके तृतीयादिद्वादशाह्निकपर्यन्तमतीव विस्तरेण तन्त्रसारे (पृ. १०-११४) नातिविस्तरेण, महार्थमञ्जरीपरिमले पृ. १३८-१५३) च संक्षेपेण व्याख्यातः। तदयमत्र संक्षेपः।

**१. आणवोपायः**

उच्चार-करण-ध्यान-वर्ण-स्थानकल्पनारूपाणां बलानामुपायानामवलम्बनमाणवोपायत्वेनाभिमन्यते। अणुरर्थात् परिमितः प्रमाताऽत्र परिमितस्वरूपान् बुद्धि-प्राण-देह-देशप्रभृतीनुपायत्वेन गृह्णन्नाणवं समावेशमाप्नोति। तत्र बुद्धिर्ध्यानात्मिका। प्राणः स्थूलः सूक्ष्मश्च। स्थूलः प्राण उच्चारणात्मा। उच्चारणं च नाम तस्य प्राणाद्याः पञ्च वृत्तयः। सूक्ष्मश्च वर्णशब्दवाच्यः। देहः संनिवेशात्मा करणशब्दवाच्यः। घटस्थापनम्, मण्डल-मन्दिर-मूर्ति-चित्रादिनिर्माणं च स्थानकल्पनपदाभिलप्यम्। एवमेव सगुणे स्वरूपे चित्तस्यैकाग्रता ध्यानपदेन, प्राणापानादिवायूनां श्वास-प्रश्वास-क्षुत्-छिक्काप्रभृतयो वृत्तय[1] उच्चारपदेन, प्राणोच्चारेण सह सहजमुच्चरितौ[2] हकारसकारौ च वर्णपदेनाभिधीयन्ते। तौ च सर्वेषां वर्णानां मन्त्राणां च बोधकौ। अथवा वर्णपदेन[3] कृष्णपीतादयो वर्णा ग्राह्याः।

---

१. "उच्चारः करणबन्धादिपूर्वं मन्त्रोदीरणम्" (७/२३७) इत्युच्चारलक्षणमाह क्षेमराजः एव च्छन्दोद्योते।

२. विज्ञानभैरवादिषु (पृ० २६, ५०, ८४, १०१-१०२, १८४-१६१) अजपाजपनाम्ना तदेतद्वर्ण्यते। अस्मदीयं संस्करणं तस्य द्रष्टव्यम्।

३. विज्ञानभैरवे ६३ संख्याका कृष्णवर्णभावना निर्दिष्टा, तिमिरभावना च ६०-६२ संख्याकासु धारणासु। बौद्धयोगशास्त्रे कसिणभावनायां नीलपीतादयो वर्णा एवावलम्ब्यन्ते। "बौद्धधर्मदर्शन" (पृ० ७६) इत्याख्यो ग्रन्थो द्रष्टव्यः।

त्रिशिरोभैरवप्रामाण्येन तन्त्रालोके (५/१२८-१३०) ग्राह्यग्राहक-संवित्ति-संनिवेश-व्याप्ति-आक्षेप-त्यागभेदेन सप्तविधं करणं वर्ण्यते। तत्र षोडशे ग्राह्यग्राहकयोः, एकादशे संवित्तेः, पञ्चदशे व्याप्तेः, ऊनत्रिंशे त्यागाक्षेपयोः, द्वात्रिंशे चाह्निके संनिवेशस्य (मुद्रायाः) स्वरूपं निरूप्यते।

प्राणस्य हृदयस्पन्दनात्मके सामान्ये व्यापारे, शरीरान्तर्विद्यमानेषु नाडीचक्रानुचक्रेषु, बाह्येषु च लिङ्ग-चत्वर-प्रतिमाप्रभृतिषु स्थान-कल्पनविधिः सम्पाद्यते। सामान्यस्पन्द-तत्त्वोन्मेषानन्तरं हि षडध्वात्मकस्य जगतः स्फुरणं भवति। तत्र कार्यकारणभावस्थले क्रमेण, कुहनप्रयोगादिषु चाक्रमेण कलनां कुर्वत् पारमेश्वरं कालात्मकं स्वरूपमेव सर्वप्रथमं भासते। भगवतः स्वरूपमिदमभेदावस्थायां काली शक्तिः, भेदावस्थायां च प्राणशक्तिरित्युच्यते। तत्र संवित्स्वरूपा काली शक्तिः स्वेच्छया क्रमाक्रमाभ्यां नानारूपेषु भासनाय प्रथमं क्रियाशक्तिरूपेण परिणमते। अस्याः प्रथम उन्मेषः प्राणव्यापार इत्युच्यते। "प्राक् संवित् प्राणे परिणता" इति[1] कल्लटवचने तदेव प्रतिपाद्यते। प्राणशक्तिरियं स्वीयैः प्राणापानादिभिः पञ्चभी रूपैर्जीव-माप्याययति। ततोऽसौ चेतन इवाभाति। क्रियाशक्तौ कालाध्वा प्राच्यभागे, उत्तरे च मूर्ति-वैचित्र्यरूपो देशाध्वा भासते। तत्र वर्ण-मन्त्र-पदाध्वनः कालाध्वनि स्थितिः, पर-सूक्ष्म-स्थूलरूपत्वात्। देशाध्वस्थितिस्तु तत्त्व-पुर-कलात्मना। शब्दार्थस्वरूपाभ्यां शक्तिशिवाभ्यां व्याप्यव्यापकभावेन पर-सूक्ष्म-स्थूलभावेन च विकासमापन्नानां वर्ण-पद-मन्त्र-कला-तत्त्व-भुवनात्मकानां षडध्वनां षडध्वशुद्धिमुखेन दीक्षाव्यापारेण विलयनप्रक्रिया सर्वेष्वेव वैष्णव-शैव-शाक्तागमेषु वर्ण्यते। अस्माभिश्च वैष्णवागममीमांसायां शब्दब्रह्मव्याख्यानावसरे मनागिवान्यत्र[2] च विस्तरेण प्रतिपादिता। प्रक्रियाभेदेन तदेव षडध्वस्वरूपमत्र देशाध्वकालाध्व-रूपेण विवेचितम्। एवं च षडध्वात्मकमिदं सम्पूर्णं जगत् क्रियाशक्तिसमुन्मेषात्मकं मन्तव्यम्।

यद्यपि षडध्वात्मकेऽस्मिन् जगति सबाह्याभ्यन्तरं सर्वत्र प्राणशक्तिस्पन्दनं सततं प्रवृत्तम्, तथापि प्रस्फुटसंवेद्यप्रयत्नोऽसौ हृदयात् प्रभृतीति तत एवायं निरूपणीयः। तत्र[3] प्रभुशक्तिः, आत्मशक्तिः' यत्न इति त्रितयं प्राणेरणे हेतुः, गुणमुख्यभावात्। हृदयप्रभृतिस्थानेषु स्पन्दमानायामस्यां प्राणशक्तौ चित्तस्य विलीनीकरणमेवात्र स्थानकल्पनाख्य आणव उपायः प्रोच्यते। एवमेव शरीरान्तर्वर्तमानेषु नाडीचक्रानुचक्रेषु, बाह्येषु लिङ्गचत्वरप्रतिमादिषु च चित्तस्य नियोजनमपि स्थानकल्पनान्तर्गतमेव। वस्तुतो बुद्धि-प्राण-देह-देशप्रभृतीनां न काचन पारमार्थिकी सत्ता। विकल्पात्मकं हि सर्वमिदं जगत्। तथापि तत्साहाय्येन परमार्थः प्राप्तुं

---

१. कल्लटवचनमेतदभिनवगुप्तादिभिर्नानास्थलेषु स्मर्यते।

२. "वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः" इत्यस्मिन् निबन्धे तन्त्रयात्रायां (पृ० १४-३४) संगृहीते, विज्ञानभैरवे (पृ० ६५-६९), सात्वतसंहिताया उपोद्घाते (पृ० ३७-४०) च द्रष्टव्यमेतत्।

३. तन्त्रसारस्था पृ० ४७-४८ टिप्पणी, मानसं चेतनाशक्तिरित्यादिको विज्ञानभैरवश्लोकः श्लो० १३५ तद्व्याख्यानं चात्र द्रष्टव्यम्।

शक्यते। तदुक्तम्[1]—"अपारमार्थिकेऽप्यस्मिन् परमार्थः प्रकाशते" इति[2], बुद्धौ प्राणे तथा देहे देशे या जडता स्थिता । तां तिरोधाय मेधावी संविद्रश्मिमयो भवेत् ॥" इति च। एवं च विकल्पात्मका एते स्थूलोपाया एवात्र आणवोपायत्वेनाभिधीयन्ते ।

**२. शाक्तोपायः**

यदा उच्चारणकरणादिस्वरूपं विकल्पं क्रमेण संस्कुरुते स्वस्वरूपप्रवेशाय, तदा भावना-क्रमस्य सत्तर्कसदागमसद्गुरूपदेशपूर्वकस्यास्ति समुपयोगः। तथा हि—विकल्पबलादेव जन्तवो बद्धमात्मानमभिमन्यन्ते। सोऽभिमानः संसारप्रतिबन्धहेतुः । अतः प्रतिद्वन्द्विरूपो विकल्प उदितः संसारहेतुं विकल्पं दलयतीत्यभ्युदयहेतुः । स चैवंरूपः—समस्तेभ्यः परिच्छिन्नस्वभावेभ्यः शिवान्तेभ्यस्तत्त्वेभ्यो यदुत्तीर्णमपरिच्छिन्नसंविन्मात्ररूपं तदेव परमार्थः, वस्तुव्यवस्थापनम्, तद् विश्वस्य ओजः। तेन प्राणिति विश्वम्, तदेव चाहम्। अतो विश्वोत्तीर्णो विश्वात्मा चाहमिति। एवं च शाम्भवदृढशक्तिपाताविद्धा एव जनाः सदागमादिक्रमेण विकल्पं संस्कृत्य परं स्वरूपं प्रविशन्ति। सार्वात्म्यभावनया हि शुद्धविकल्पानां सृष्टिहेतुरयं शाक्त उपायः प्रस्फुरति । तदा किल साधकः सर्वान् जागतिकान् पदार्थान् परमार्थस्वरूपान् पश्यति, सर्वेषु तेषु स्वीयं शुद्धसंविन्मयं परमार्थं स्वरूपं भावयति ।

**३. शाम्भवोपायः**

सर्वं शिवमयं जगत्। सर्वमिदं भावजातं बोधगगने प्रतिबिम्बमात्रम्, प्रतिबिम्बलक्षणो-पेतत्वात्। इदं हि[3] प्रतिबिम्बलक्षणम्—यद्भेदेन भासितुमशक्तमन्यव्यामिश्रत्वेनैव भाति, तत् प्रतिबिम्बमिति। मुखरूपमिव दर्पणे। दर्पणे भासमानस्य मुखप्रतिबिम्बस्य हि न काचन स्वतन्त्रा सत्ता, किन्तु दर्पणे संक्रान्तं मुखमेव प्रतिबिम्बतया भासते । एवमेव बोधगमने प्रकाशमानस्य भावजातस्यापि न काचन स्वतन्त्रा स्थितिः। यत्तु अन्यामिश्रं स्वतन्त्रं सद् भासते तद्बिम्बम् यथा हि बिम्बभूतस्य मुखस्य भासने न दर्पणाद्यपेक्षा। वस्तुतोऽस्य विश्वस्य न स्वतन्त्रा काचन स्थितिः, किन्तु दर्पणदृश्यमाननगरीतुल्यमिदं विश्वं शिवमये दर्पणे प्रतिभासते ।

ननु यथा दर्पणे प्रतिभासमानं प्रतिबिम्बं बिम्बं विना नैव भासते, तथैव शिवमये दर्पणे प्रतिभासमानमिदं विश्वं बिम्बं विना कथं भासेत? किं सद् बिम्बस्थानीयं तत्त्वमिति चेत्? श्रूयताम्—नहि वस्तुस्वभावः परिच्छेत्तुं शक्यते। अग्निरुष्णो भवति, जलं च शीतलमिति स्वाभाविकमेतत्। कुत्रायं प्रश्नस्यावसरः? एवमेव शिवस्यायं स्वभावो यत् स स्वीयं बोधमयं स्वरूपं स्वेच्छया जगद्रूपेण भासयति। शिवस्य स्वातन्त्र्यशक्तेरेष महिमा यत् शिवमये दर्पणे

---

१. तन्त्रालोके (५/७)।

२. तन्त्रालोकविवेके (५/१०)।

३. तन्त्रसारे (पृ० १०)। "अन्यामिश्रं स्वतन्त्रं सद्भासमानं मुखं यथा" (३/५३) इति च बिम्बलक्षणं तन्त्रालोके।

बिम्बसत्तामनपेक्ष्यैव जगद्रूपं प्रतिबिम्बं भासते। वस्तुतो निर्विकल्पं शिवस्वरूपमपहाय जगतो न स्वतन्त्रा काचन वास्तविकी स्थितिरिति निर्विकल्पे स्वात्मस्वरूपे चित्तस्य समाधानप्रयास एव शाम्भवोपायतया प्रख्यायते।

**४. अनुपायः**

यदा खलु दृढशक्तिपाताविद्धः साधकः सकृदेव सद्गुरुवचनमवधार्य स्वयमेव स्वरूपं विवेचयति, तदा पुनरुपायविरहितो नित्योदितोऽस्य समावेशो जायते। अत्र च तर्काख्यो योगस्तेनाश्रीयते। कथमिति चेत्? उच्यते—योऽयं परमेश्वरः स्वप्रकाशरूपः स्वात्मा, तत्र किमुपायेन क्रियते? न स्वरूपलाभः, नित्यत्वात्। न ज्ञप्तिः, स्वयं प्रकाशमानत्वात्। न आवरणविगमः, आवरणस्य कस्यचिदप्यसम्भवात्। न तदनुप्रवेशः, अनुप्रवेष्टुर्व्यतिरिक्तस्याभावात्। कश्चात्र उपायः? तस्यापि व्यतिरिक्तस्यानुपपत्तेः। तस्मात् समस्तमिदमेकं चिन्मात्रतत्त्वं कालेनाकलितम्, देशेनापरिच्छिन्नम्, उपाधिभिरम्लानम्, आकृतिभिरनियन्त्रितम्, शब्दैरसंश्लिष्टम्, प्रमाणैरप्रपञ्चितम्, कालादेः प्रमाणपर्यन्तस्य स्वेच्छयैव स्वरूपलाभनिमित्तं च स्वतन्त्रमानन्दघनं तत्त्वम्। तदेव चाहम्। तत्रैव अन्तर्मयि विश्वं प्रतिबिम्बितम्। एवं दृढं विविञ्चानस्य शश्वदेव पारमेश्वरः समावेशो निरुपायक एव भासते। तस्य च न मन्त्र-पूजा-ध्यान-चर्यानियन्त्रणा[1] काचित्। तदुक्तम्—[2]"उपायजालं न शिवं प्रकाशयेद् घटेन किं भाति सहस्रदीधितिः। विवेचयन्नित्थमुदारदर्शनः स्वयंप्रकाशं शिवमाविशेत् क्षणात्॥" इति।

नन्वभावात्मकस्यास्य कथमुपायेषु परिगणनं कर्तुं शक्यते? इति चेत्, नात्रानुपायपदे नञो निषेधार्थत्वम्, किन्त्वल्पार्थकत्वमभिप्रेयते। "नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विकारतदन्ययोः।" इत्येवं नञोऽष्टविधानामर्थानां प्रतिपादनात्। पर्युदासस्य 'अनुदरा कन्या' इति वदल्पार्थत्वेऽपि भावात्। (तथा च) अनुपायत्वम् (इत्यस्य) अल्पोपायत्वमित्यर्थः" (त. वि. २/२; पृ. ३) इति च जयरथव्याख्यानात्। एवं च केवलं सत्तर्कस्य योगाङ्गस्यावलम्बनमात्रेणानायासं सहजतया स्वस्वरूपं प्रकाशत इत्यस्याप्युपायत्वमुपेयते। अनुपायप्रक्रिया चैषा विज्ञानभैरव-संकेत-पद्धति-तन्त्रालोक-महार्थमञ्जरी-स्वच्छन्दतन्त्रप्रभृतिषु महता संरम्भेण व्याख्याता। सा च सहजयोगतो नातीव भिन्नेति विज्ञानभैरवव्याख्यानेऽस्मदीये द्रष्टव्यम्।

## शाक्तं दर्शनम्

व्याख्यातमुपायचतुष्टयम्। अथ तदुपायचतुष्टयलभ्यं परतत्त्वस्वरूपं त्रिपुरा-कुल-क्रम-त्रिकसाधारणं विशिष्टं च निरूप्यते। शैवेषु शाक्तेषु चाद्वैतागमदर्शनेषु [3]प्रकाशशब्दः शिवतत्त्व-वाचकत्वेन विमर्शशब्दश्च शक्तितत्त्ववाचकत्वेन प्रसिद्धः। शिवपारम्यवादिनः शैवाः, शक्ति-

---

१. इदं कार्यमिदं न कार्यमिति नियमो नियन्त्रणा।

२. तन्त्रसारे (पृ० ६) इत्यत्र। श्लोकोऽयमस्माभिर्विज्ञानभैरवे पृ० १४६ व्याख्यातः।

३. प्रकाशविमर्शशब्दयोर्विविधानि व्याख्यानानि नि० उ०, पृ० ८३-८४ टिप्पण्यां द्रष्टव्यानि।

पारम्यवादिनः शाक्ता इति चास्माभिः प्रतिपादितमेव। तत्र शाक्ते सम्प्रदाये षडध्वान्तःपाति षट्त्रिंशत्तत्त्वातीतं ब्रह्म संविद्रूपम्, शैवे तु सम्प्रदाये परमशिवस्वरूपम्। भट्टप्रद्युम्नेन तत्त्वगर्भे षट्त्रिंशत्तत्त्वानां संविच्छक्तिप्रसरमात्रत्वमङ्गीक्रियते। एवं च शाक्तेषु दर्शनेषु संविदभिधानं परं ब्रह्म। तत एव सर्वं प्रवर्तते। संविदियं शैवैरपि नापलपितुं शक्या। अत एवोक्तमभिनवगुप्तेन प्रत्यभिज्ञाविवृतिविमर्शिन्याम्—"इह भावानां सत्त्वमसत्त्वं वा व्यवतिष्ठमानं संविद्विश्रान्तिमन्तरेण नोपपद्यते। संविद्विश्रान्ता हि भावाः प्रकाशमाना भवन्ति। प्रकाशमानता चैषां संविदभेद एव। प्रकाश एव संविद् यतः।···तदमी प्रकाश एव तावद्विश्रान्ता भावाः। प्रकाशश्च विमर्शशून्यो न भवति।···संविदो विमर्शपर्यन्तत्वात्" (भा. १, पृ. ४-६) इति। अत्र तेन शिवपारम्यानुसारं संविदः प्रकाशविमर्शात्मकत्वं साध्यते। शाक्ते तु दर्शने संविदः षट्त्रिंशत्तत्त्वातीतत्वात् प्रकाशविमर्शात्मकस्य शिवशक्तिरूपस्याद्यस्य तत्त्वद्वयस्यापि तत्प्रसरमात्रत्वमेव सिद्ध्यति। अत एव योगिनीहृदय-ऋजुविमर्शिन्यादिषु तत्र तत्र मन्त्र-मातृका-मुद्रा-चक्रप्रभृतीनां संविदात्मकत्वमेव प्रदर्श्यते।

देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी चिदानन्दघनस्वात्मपरमार्था स्पृहणीयतया हृदयहारिणी संविदेव महात्रिपुरसुन्दरीपदाभिलप्या त्रैपुरे दर्शने।[1] संविदेव भगवती स्वान्तः स्थितं विश्वं बहिः प्रकाशयतीति हि शाक्तदर्शन-रहस्यम्। सोऽयं शक्तिपारम्यपक्षो नित्याषोडशिकार्णवे चतुर्थे पटले—"त्रिपुरा परमा शक्तिराद्या जातादितः प्रिये" (४/४) इत्यादिना "एवं देवी त्र्यक्षरा तु महात्रिपुरसुन्दरी" (४/१८) इत्यन्तेन ग्रन्थेन सम्यग् व्याख्यातः। यदाधृत्य—"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि" (सौ. ल. १) इत्यादीनि स्तुतिवचांसि प्रसरन्ति।

एवं च वामकेश्वरदर्शने त्रिपुराभिधाना परा संविदेव परब्रह्मेत्युच्यते। "त्रिमूर्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः। लये त्रिलोक्या अपि पूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम॥ शिवशक्त्यात्मसंज्ञेयं तत्त्वत्रितयपूरणात्। त्रिलोकजननी चाथ तेन सा त्रिपुरा स्मृता॥" इति च त्रिपुरानिर्वचनप्रतिपादकौ श्लोकौ प्रसिद्धौ। त्रिपुरापदस्य नानाविधा निरुक्तयोऽन्यत्रापि दृश्यन्ते। तत्र त्रिशक्ति-त्रिचक्र-त्रिधाम-त्रिबीज-त्रितत्त्व-त्रिगुण-त्रिकोण-त्रिमूर्तिप्रभृतीनां त्रित्वसंख्याविशिष्टानां सर्वेषामेव पदार्थानां जननी सा निरुच्यते। एवमेव त्रिकदर्शनमपि त्रित्वसंख्याप्रियम्। तथा हि—[2]सिद्धानामक-मालिनीतिविख्यात-तन्त्रत्रयाश्रितत्वात्, पर-परापर-अपररूपत्रिकप्रतिपादकत्वात्, तदन्तर्गतस्य त्रिकत्रयस्य—शिव-शक्ति-तत्सामरस्यरूपस्य, शिव-शक्ति-नररूपस्य, परा-अपरा-परापरादेवीरूपस्य—च व्याख्यायां प्राधान्येन प्रवृत्तत्वात्, भेद-भेदाभेद-अभेदरूपस्य त्रिप्रकारस्यापि ज्ञानस्य दार्शनिकदिशा स्पष्टीकरणाच्चेदं त्रिकदर्शनतया प्रख्यायते। त्रैपुरे सम्प्रदाये सङ्केतपद्धतिं योगिनीहृदयं चानुसरन्तः शिवानन्द-विद्यानन्द-अमृतानन्द-प्रभृतय आचार्या अनाख्यं तुरीयं समष्टिस्वरूपं वा तत्त्वमेकमधिकं परिगणय्य धाम-तत्त्व-पीठ-लिङ्ग-शक्ति-बीजादिकस्य चातुर्विध्यमङ्गीकुर्वन्ति।

---

१. नि० उ०, पृ० ८५ अत्रत्या टिप्पणी द्रष्टव्या।

२. विज्ञानभैरवस्था पृ० १ टिप्पणी द्रष्टव्या।

क्रमदर्शनं च लकुलीशपाशुपतदर्शनवत् पदार्थपञ्चकस्य तद्भिन्नप्रकृतिकस्य प्रतिपादकं भवति। तद्यथा—क्रमदर्शनाभ्युपगताः परतत्त्वस्य स्फुरणधारा व्योमवामेश्वरी-खेचरी-दिक्चरी-गोचरी-भूचरीनाम्न्यः पञ्च। परशक्तयः सृष्टि-स्थिति-संहार-अनाख्य-भासारूपाः पञ्च। वाग्भेदाः परा-सूक्ष्मा-पश्यन्ती-मध्यमा- वैखरीरूपाः पञ्च। क्रमेणार्च्यदेवताचक्राणि श्रीपीठ-पञ्चवाह-नेत्रत्रय-वृन्दचक्र-गुरुपङ्क्तिरूपाणि पञ्च। परतत्त्वस्वरूपत्वेन तदभेदेन विद्यमानाः शक्तयश्चित्-आनन्द-इच्छा-ज्ञान-क्रियारूपाः पञ्च। इयं पञ्चकविचारधारा मौलिकस्य काल्याः क्षेप-ज्ञान-प्रसंख्यान-गति-नादरूपकृत्यपञ्चकविचारस्य प्रभावात् प्रसूतेति प्रतीयते। अथवा लकुलीश-पाशुपतेन मतेन पञ्चविधस्याष्टकगणस्य प्रतिपादकेन तस्य सम्बन्धोऽन्वेषणीयः।

त्रिविधानां चतुःसंख्याकानां पञ्चप्रकाराणां वैषां पदार्थानां व्याख्यानमुखेनैव प्रवर्तते त्रिपुरा-त्रिक-क्रमदर्शनानां वैशिष्ट्यम्। विस्तरभयान्नात्र तत् प्रपञ्च्यते। विशेषजिज्ञासुभिस्ते ते आकरग्रन्था महार्थमञ्जरीशैवदर्शनबिन्दुप्रभृतयः प्रकरणग्रन्थाश्चावलोकनीयाः। अस्माभिश्च शाक्तदर्शनपरिभाषाकोशे हिन्दीभाषामये त इमे व्याख्याताः।

## कौलं दर्शनम्

कौलदर्शने वर्तते किमपि वैशिष्ट्यम्। तत्र अनुत्तरमेव परमं तत्त्वम्। अनुत्तरा च पराप्रतिभा परावागपरपर्याया वर्तते तस्य शक्तिः। प्रकाशविमर्शयोरिवानयोः सामरस्य-मद्वयत्वं चोपेयते। अत एवानुत्तराभिधमिदं षट्त्रिंशत्तत्त्वातीतं सप्तत्रिंशं तत्त्वम्। अनुत्तरः शिवोऽत्र अकुल-कुलपदाभ्याम्, तेन सामरस्यमापन्ना च शक्तिः कौलिकीत्यभिधीयते। तदुक्तं तन्त्रालोके—"अकुलस्यास्य देवस्य कुलप्रथनशालिनी। कौलिकी सा परा शक्तिरवियुक्तो यथा प्रभुः।" (३/६७) इति, "नौम्यनुत्तरनाथस्य रश्मिचक्रमहं सदा। शिवशक्तीति विख्यातं परापरफलप्रदम्॥···यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च। तत्कुलं विद्धि सर्वज्ञ शिव-शक्तिविवर्जितम्॥" इति च तद्व्याख्याने विवेके।

अनुत्तराख्यस्यपरमेश्वरस्य तावन्मुख्यास्तिस्रः शक्तयो भवन्ति—अनुत्तरः, इच्छा, उन्मेष इति। तदेव परामर्शत्रयम् अ इ उ इति। एतस्मादेव त्रितयात् सर्वः शक्तिप्रपञ्चः प्रवर्तते। अनुत्तर एव हि विश्रान्तिरानन्दः, इच्छायामेव विश्रान्तिरीशनम्, उन्मेष एव हि विश्रान्तिरूर्मिः। तदेव परामर्शत्रयम् आ ई ऊ इति। अत्र च प्राच्यं परामर्शत्रयं प्रकाशभाग-सारत्वात् सूर्यात्मकम्। चरमं परामर्शत्रयं विश्रान्तिस्वभावाह्लादप्राधान्यात् सोमात्मकम्। इयति यावत् कर्मांशस्यानुप्रवेशो नास्ति, ज्ञानशक्तिप्राधान्यात्। यदा तु इच्छायामीशने च कर्मानु-प्रविशति यत्तद् इष्यमाणम् ईश्यमानमिति चोच्यते, तदाऽस्य द्वौ भेदौ। प्रकाशमात्रेण रश्रुतिः, विश्रान्त्या लश्रुतिः, रलयोः प्रकाशस्तम्भस्वभावत्वात्। इष्यमाणं च न बाह्यवत् स्फुटम्। स्फुटरूपत्वे तदेव निर्माणं स्यात्। न इच्छा ईशनं वा। अतोऽस्फुटत्वादेव श्रुतिमात्रं रलयोः, न व्यञ्जनवत् स्थितिः। तदेतद्वर्णचतुष्टयमुभयच्छायाधारित्वान्नपुंसकम् ऋ ॠ ऌ ॡ इति। अनुत्तरानन्दयोरिच्छादिषु यदा प्रसरस्तदा वर्णद्वयम् ए ओ इति। तत्रापि पुनरनुत्तरानन्दसंघट्टाद् वर्णद्वयम् ऐ औ इति। सेयं क्रियाशक्तिः। तदेव च वर्णचतुष्टयम् ए ऐ ओ औ इति। ततः पुनः

क्रियाशक्त्यन्ते सर्वं कार्यभूतं यावदनुत्तरे प्रवेक्ष्यति, तावदेव पूर्वं संवेदनसारतया प्रकाशमात्रत्वेन बिन्दुतया आस्ते अमिति। ततस्तत्रैवानुत्तरस्य विसर्गो जायते अः इति। एवं षोडशकं परामर्शाणां बीजस्वरूपमुच्यते।

तदुत्थं व्यञ्जनात्मकं योनिरूपम्। तत्रानुत्तरात् कवर्गः, श्रद्धाया इच्छायाश्चवर्गः, सकर्मिकाया इच्छाया द्वौ टवर्गस्तवर्गश्च, उन्मेषात् पवर्गः। इच्छाया एव त्रिविधाया य-र-लाः, उन्मेषाद् वकारः। इच्छाया एव त्रिविधायाः श-ष-साः, विसर्गाद् हकारः, योनिसंयोगजः क्षकारः। इत्येवमेष भगवान् अनुत्तर एव कुलेश्वररूपः। तस्य च एकैव कौलिकी विसर्गशक्तिः, ययाऽऽनन्दरूपात् प्रभृति इयता बहिःसृष्टिपर्यन्तेन प्रस्पन्दन्तो वर्गादिपरामर्शा एव बहिः षडध्वात्मना समुज्जृम्भन्ते। स चैष विसर्गस्त्रिधा—आणवश्चित्तविश्रान्तिरूपः, शाक्तश्चित्त-सम्बोधलक्षणः, शाम्भवश्चित्तप्रलयरूप इति। एवं विसर्ग एव विश्वजनने भगवतः शक्तिः। एते च शक्तिरूपा एव शुद्धाः परामर्शाः शुद्धविद्यायां परापररूपत्वेन मायोन्मेषमात्रसंकोचाद् विद्याविद्येश्वररूपतां भजन्ते। मायायां पुनः स्फुटीभूतभेदविभागा मायीयवर्णतां भजन्ते, ये पश्यन्ती-मध्यमा-वैखरीषु व्यावहारिकत्वमासाद्य बहीरूपतत्त्वस्वभावतापत्तिपर्यन्ताः प्रस्फुरन्ति। यदा च तेषां शुद्धैः परामर्शैः प्रत्युज्जीवनं क्रियते, तदा ते सवीर्या भवन्ति। ते च तादृशा भोग-मोक्षप्रदा भवन्ति। इत्येषा कौलदर्शनोपनिषत्।

## शाक्तो योगः

व्याख्यातं शाक्तं दर्शनम्। परमतत्त्वसाक्षात्काराय योगो भवति प्रधानतमं साधनमिति साम्प्रतं शाक्तः कुण्डलिनीयोगः षडङ्गयोगश्च समुपवर्ण्यते। तत्र नेत्रतन्त्रे स्थूलं सूक्ष्मं परं चेति त्रिविधं[1] ध्यानमुपदिश्यते। "स्थूलं तु यजनं होमो जपो ध्यानं समुद्रकम्। मन्त्राणि मोहनादीनि मन्त्रराट् कुरुते भृशम्॥ सूक्ष्मं चक्रादियोगेन कलानाड्युदयेन च। परं सर्वात्मकं चैव मोक्षदं मृत्युजिद् भवेत्॥" (६/७-८) इत्येवं स्थूल-सूक्ष्म-परध्यानानां लक्षणमभिधाय षष्ठसप्तमाष्ट-माधिकारेषु तानि क्रमेण वर्णितानि। अत्र सूक्ष्म-पदेन कुण्डलिनीयोगः, परपदेन चाष्टाङ्गिको योग उक्तः। कुण्डलिनीयोगस्य कुलप्रक्रियान्तर्भूतत्वात् स कौलिकयोगनाम्नाऽभिधातुं शक्यते। ज्ञानयोगक्रियाचर्याख्यपादचतुष्टयात्मकेष्वागमेषु तन्त्रेषु च योगपादे षडङ्गो योगो भण्यते। दृश्यते च सप्ताङ्गिकोऽष्टाङ्गिको वा योगस्तत्र तत्र। अष्टाङ्गिको योगोऽप्यत्रत्यो न सर्वथाऽनु-करोति पातञ्जलं योगम्, यथा हि वैष्णवमीमांसायां निर्दिष्टम्। तदत्र कौलिकस्तान्त्रिकश्चायं योगो नातिविस्तरेण वर्ण्यते।

**कौलिको योगविधिः**

नेत्रतन्त्रे सप्तमाधिकारे योगविधिरयं प्रदर्शितः। तथा हि—"ऋतुचक्रं स्वराधारं त्रिलक्ष्यं व्योमपञ्चकम्॥ ग्रन्थिद्वादशसंयुक्तं शक्तित्रयसमन्वितम्। धामत्रयपथाक्रान्तं नाडित्रय-

---

१. ध्यानशब्दोऽत्र योगार्थवाचकः।

समन्वितम् ॥ ज्ञात्वा शरीरं सुश्रोणि दशनाडिरथावृतम् । द्वासप्तत्या सहस्रैस्तु सार्धकोटित्रयेण च ॥ नाडिवृन्दैः समाक्रान्तं मलिनं व्याधिभिर्वृतम् । सूक्ष्मध्यानामृतेनैव परेणैवोदितेन तु ॥ आप्यायं कुरुते योगी आत्मनो वा परस्य च । दिव्यदेहः स भवति सर्वव्याधिविवर्जितः ॥" (७/१-५) इति । इमे श्लोकाः क्षेमराजेनेत्थं व्याख्याताः —

"ऋतवः षट् ।[1] जन्म-नाभि-हृत्-तालु-बिन्दु-नादस्थानानि नाडि-माया-योग-भेदन-दीप्ति-शान्ताख्यानि नाडिमायादिप्रसराश्रयत्वात् चक्राणि यत्र । स्वराः षोडश । अङ्गुष्ठ-गुल्फ-जानु-मेढ्र-पायु-कन्द-नाडि-जठर-हृत्-कूर्मनाडी-कण्ठ--तालु---भ्रूमध्य--ललाट-ब्रह्मरन्ध्र---द्वादशान्ताख्या जीवस्याधारकत्वादाधारा यत्र । यदि वा सर्वसहत्वादस्य नयस्य कुलप्रक्रियया—"मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः । मूले तु शाक्तः कथितो बोधनादप्रवर्तकः ॥ अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये । नाभ्यधः पवनाधारे नाभावेव घटाभिधः ॥ नाभिहृन्मध्यमार्गे तु सर्वकामाभिधो मतः । संजीवन्यभिधानाख्यो हृत्पद्मोदरमध्यगः ॥ वक्षःस्थले स्थितः कूर्मो गले लोलाभिधः स्मृतः । लम्भकस्य स्थितश्चोर्ध्वे सुधाधारः सुधात्मकः ॥ तस्यैव मूलमाश्रित्य सौम्यः सोमकलावृतः । भ्रूमध्ये गगनाभोगे विद्याकमलसंज्ञितः ॥ रौद्रस्तालुतलाधारो रुद्रशक्त्या त्वधिष्ठितः । चिन्तामण्यभिधानाख्यश्चतुष्पथनिवासि यत् ॥ ब्रह्मरन्ध्रस्य मध्ये तु तुर्याधारस्तु मस्तके । नाड्याधारः परः सूक्ष्मो घनव्याप्तिप्रबोधकः ॥"इत्युक्ताः षोडशाधारा (अत्र ग्राह्याः) इति । त्रीणि अन्तर्बहिरुभयरूपाणि लक्ष्याणि लक्षणीयानि यत्र । निरावरणत्वात्[2] "खमनन्तं तु जन्माख्यम्" (७/२७) इति वक्ष्यमाणानां जन्म-नाभि-हृद्-बिन्दु-नादरूपाणां व्योम्ना पञ्चकं विद्यते यत्र ।[3] "जन्ममूले तु मायाख्यः" (७/२२) इत्यभिधास्यमानाश्चैतन्यावृत्तिहेतुत्वाद् ग्रन्थयो माया-पाशव-ब्रह्म-विष्णु-रुद्र-ईश्वर-सदाशिव-इन्धिका-दीपिका-बैन्दव-नाद-शक्त्याख्या ये पाशास्तैः संयुक्तम् । इच्छादिना शक्तित्रयेण सम्यगन्वितमेषणीयादिविषये प्रवर्तमानम् । सोम-सूर्य-वह्निरूपधामत्रयपथैः सव्यापसव्यपवनैर्मध्यमपवनेन चाधिष्ठितम् । इडा-पिङ्गला-सुषुम्नाख्येन पवनाश्रयेण नाडित्रयेण युक्तम् । गान्धारी-हस्तिजिह्वा-पूषा-यशा-अलम्बुसा-कुहू-शङ्खिनीभिश्च युक्तत्वाद् दश नाड्यः पन्थानो येषां प्राणापानसमानोदानव्याननागकूर्मकृकरदेवदत्तधनञ्जयाख्यास्तैरा-समन्ताद् धृतामोतप्रोतम् । दिग्देशकावास्थितनाडिदशकप्रपञ्चभूताभिर्द्वासप्तत्या सहस्रैर्मध्यव्याप्ता सार्धकोटित्रयेण च महाव्याप्त्या नाडिवृन्दैः समाक्रान्तम् । आणवमायीयकार्ममलयोगान्मलिनं शरीरं ज्ञात्वा योगी ···गतव्याधिर्दिव्यदेहो भवति" इति ।

योगी चक्राधारग्रन्थ्यादीन्येतानि मन्त्रवीर्यभूतचित्स्फुरत्तात्मना ज्ञानशूलेन भित्त्वा कालवञ्चनमुखेन मृत्युजित् कालाजिच्च भूत्वा निरञ्जनं पदमश्नुते । तत्रेयं प्रक्रिया—साधक-

---

१. "जन्माख्ये नाडिचक्रं तु नाभौ मायाख्यमुत्तमम् ॥ हृदिस्थं योगिचक्रं तु तालुस्थं भेदनं स्मृतम् । बिन्दुस्थं दीप्तिचक्रं तु नादस्थं शान्तमुच्यते ॥" ७/२८-२९ इति ।

२. "खमनन्तं तु जन्माख्यं नाभौ व्योम द्वितीयकम् । तृतीयं तु हृदि स्थाने चतुर्थं बिन्दुमध्यतः ॥ नादाख्यं तु समुद्दिष्टं··· ७/२७-२८ इति ।

३. नि० उ०, पृ० ११४ अवस्था द्वितीया टिप्पणी द्रष्टव्या ।

श्चित्तप्राणैकाग्र्येण कन्दभूमिमवष्टभ्य संकोचविकासाभ्यासेन शक्त्युन्मेषमुपलक्ष्य मत्तगन्धस्थानं पीडयेद् यथा शक्तिरूर्ध्वमुखैव भवति । [1]कन्दभूमिविस्फुरितयाऽनया शक्त्या योगी खेचर्याख्यां मुद्रां लभेत । लब्धया तु तया यदा आत्माणुर्मुद्रितस्तद्वशः सम्पन्नस्तदा मन्त्रवीर्यस्फुरत्तात्मना विज्ञानेनोर्ध्वं द्वादशान्तं यावत् प्रसरेत् । तत्र परं शिवं विक्षोभ्य समनापदावरोहणेन सृष्टयुन्मुखं कृत्वा तत्र परमानन्दमयममृतं प्राप्य महाप्रकाशात्मसमनारूढं धाम लीलया विक्षोभ्यापातोल्लासाख्यं चन्द्रोदयं प्रतीक्षेत । चन्द्रोदये सति तस्माच्छुद्धममृतं प्राप्यान्तर्मुखीभूतया स्वशक्त्या मध्यमार्गेणाधोधः कर्षयेत्, तेन च चक्राधारादि सर्वं निषिञ्चेत् । ब्रह्मस्थानं हृद्धाम यावत् तदमृतं प्राप्तं भवति । ततोऽप्यधो नाभेरधःस्थाने निषिच्य कालाग्न्यन्तमापूर्य समन्तात् परिपूर्णं देहं स्मरेत् । ततः सर्वरोमकूपैः प्रसृत्यान्तर्बहिरासादितव्याप्ति सर्वदिक्कममृतार्णवप्लावनसमरसीभूतपरमामृतरूपमिच्छाज्ञानक्रियाशक्तिकचितं परमशिवरूपं निरामयमात्मानं चिन्तयेदिति ।

नित्याषोडशिकार्णवे रूपकमुखेनैष एवार्थः प्रदर्शितः । तद्यथा—"यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी ॥ शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् । तदुद्भवामृतस्यन्दपरमानन्दनन्दिता ॥ कुलयोषित् कुलं त्यक्त्वा परं पुरुषमेति सा । निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम् ॥ "(४/१२-१४) इति । मूलाधारगतचतुर्दलपद्ममध्यत्रिकोणकुलस्थानमत्र शृङ्गाटपदेनोच्यते । मूलाधारे स्थितायाः कुण्डलिन्याः षट्चक्रपञ्चगगनद्वादशग्रन्थिभेदक्रमेणाकुलसमावेशो योगिनीहृदये दीपिकायामपि च (पृ. २८७-२९०) प्रकाशितः । एवं च नेत्रतन्त्रप्रतिपादिताद्योगात् त्रिपुरातन्त्रप्रतिपादितयोगस्य सत्यपि साम्ये कश्चन विशेषोऽपि दृश्यते । योगिनीहृदये (३/१४६) आधारार्थे रन्ध्रशब्दः प्रयुक्तः । तत्र दीपिकायामाधारस्वाधिष्ठानमणिपूरानाहततदूर्ध्ववज्रपद्मकण्ठलम्बिकाविशुद्धयाज्ञाख्यानि नवाधाराणि परिगम्य प्रमाणरूपेणैतत् स्वच्छन्दसंग्रह-वचनमुदाहृतम्—"आधारं स्वाधिष्ठानं च मणिपूरमनाहतम् । मध्यमं वज्रकण्ठं च लम्बिकां च विशुद्धिकाम् ॥ आज्ञां च नवकं विद्धि षट् चक्राणि त्रिहीनकम् ।" (पृ. २९५) इति ।

योगिनीहृदये—"अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः । नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे ॥ (१/२५) इत्यत्र नवाधाराण्येव सूचितानि । व्याख्यातानि च तथैव स्वच्छन्दसंग्रहप्रामाण्येन दीपिकायाम् । अत्रत्यान्याद्यानि चत्वारि नामानि प्रायस्तान्येव यानि नेत्रतन्त्रोद्योतधृतकुलप्रक्रियायां प्रदर्शितानि । तत्र कुल इति प्रथमं नाम, अत्र चाकुलमिति । अत्रैव "अकुलादिषु" (२/८) इति श्लोके स्थानेष्वेतेषु नवचक्राराधनमुपदिष्टम् । वरिवस्यारहस्यप्रकाशे—"सुषुम्णाख्यनाडीमूलाग्रयोर्द्वे सहस्रदलकमले, मध्ये चाष्टदलषड्दलादीनि त्रिंशत्पद्मानि सविस्तरं स्वच्छन्दसंग्रहादौ प्रपञ्चितानि "(पृ. १६) इति कश्चन विशेष उक्तः । एष चार्थो दीपिकाकारेणापि विवृतः (पृ. ३९) । स्वच्छन्दसंग्रहस्तु साम्प्रतं नोपलभ्यते । अतोऽत्र विषये नाधिकं किमपि वक्तुं पार्यते ।

---

१. "जन्माधारस्य सुश्रोणि पर्यायान् शृण्वतः परम् । जन्मस्थानं तु कन्दाख्यं कूर्माख्यं स्थानपञ्चकम् ॥ मत्स्योदरं तथैवेह मूलाधारस्तथोच्यते ॥" ने० त० ७/३१-३२ इति ।

श्रीतत्त्वचिन्तामणिस्थे षट्चक्रविवरणे सौन्दर्यलहर्यां लक्ष्मीधरायामन्येषु परवर्तिग्रन्थेषु च मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञाख्यानि षट्चक्राणि प्रतिपाद्यन्ते। नेत्रतन्त्रे तु जन्म-नाभि-हृत्-तालु-बिन्दु-नादस्थानानि नाडि-माया-योग-भेदन-दीप्ति-शान्ताख्यानि षट्चक्राणि प्रतिपाद्यन्त इति पूर्वमेवोक्तम्। मूलाधारस्वाधिष्ठानादीनां नाडिमायादीनां च चक्राणां स्थानानि प्रायः समानान्येव। नाडिप्रसरहेतुत्वात्, "नाभिचक्रे कायव्यूहज्ञानम्" (यो. सू. ३/२५) इति नीत्या समस्तमायाप्रपञ्चख्यातिहेतुत्वात्, योगिनां चित्तैकाग्र्यप्रदत्वात्, प्रयत्नेन भेदनीयत्वात्, दीप्तिरूपत्वात्, शान्तिप्रदत्त्वाच्च एतानि चक्राणि नाडिनामादिभिरन्वर्थैः पदैरभिधीयन्ते स्म। परवर्तिनि तु काले तानि मूलाधारस्वाधिष्ठानादिसंज्ञाभिः समलङ्कृतान्यक्रियन्तेति तु वयं प्रतीमः।

उपर्युद्धृतेष्वन्येषु च ग्रन्थेषु चक्राणामाधाराणां च संकर इव दृश्यते। सिद्धसिद्धान्तपद्धतिसदृशेषु [1]हठयोगग्रन्थेष्वपि—"नवचक्रं कलाधारं त्रिलक्ष्यं व्योमपञ्चकम्" (२/३१) इत्यादिना कौलिको योगः "यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि" (२/३२) इत्यादिना च पातञ्जलो योगः प्रतिपाद्यते। हठयोगप्रदीपिकाप्रभृतिष्वपि तथैव कौलिकस्य पातञ्जलस्य च योगस्य प्रतिपादनं भवति। वर्तते किल तत्र स्वकीयमपि वैशिष्ट्यं पार्थक्येन। तच्च षट्कर्मप्रतिपादने बन्धनिरूपणे च प्राधान्येन दरीदृश्यते। अप्रासङ्गिकत्वात्तन्नात्र प्रतन्यते। अथ तान्त्रिकः षडङ्गः सप्ताङ्गोऽष्टाङ्गो वा योगो व्याख्यायते।

**तान्त्रिको योगविधिः**

जयाख्याप्रतिपादितोऽष्टाङ्गो योगः पातञ्जलादष्टाङ्गयोगाद् भिद्यत इत्यस्माभिर्वैष्णवागममीमांसायां निदर्शितम्। आगमिके तान्त्रिके चाष्टाङ्गे योगे यमनियमासनानां योगाङ्गानां स्थाने जय-योग-ऊहाख्यानां परिगणनं भवति। मृगेन्द्रागमयोगपादे—"प्राणायामः प्रत्याहारो धारणा ध्यानवीक्षणे। जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमः स्वयम्॥ (१/३) इत्येवं जयोक्तान्येव योगाङ्गानि परिगणितानि। अत्र वीक्षणमभिवीक्षणम् ऊह इत्यनर्थान्तरम्। अन्यत् सर्वं समानम्। सप्त अङ्गानि, अङ्गी योगश्चाष्टम इति तु प्रतिपादनभङ्गिभेदः। अत्र जपो योगाङ्गेषु परिगण्यते। एवं वैष्णवेषु शैवेषु चागमेषु सप्ताङ्गोऽष्टाङ्गो वा योगः प्रतिपाद्यते। तेषां लक्षणानि जयाख्यायामेवं वर्ण्यन्ते—"कनीयान् मध्यमो ज्येष्ठः प्राणायामः प्रकीर्तितः॥ प्रत्याहारं ततः कुर्याच्चित्तसंयमनं तु सः। बुद्धिर्मनस्त्वहङ्कारस्त्रिभिश्चित्तं प्रकीर्तितम्॥ तथापि मनसः कुर्यात् प्रत्याहारं प्रयत्नतः। मनश्चतुर्विधं प्रोक्तं प्रत्याहारेण निर्जितम्॥··· ध्यानं लक्ष्यस्य निष्पत्तिश्चिन्तनं तत्प्रकीर्तितम्॥ धारणा तु ततो धार्या शीतदाहापनुत्तये। पञ्चधा[2] पूर्ववत् सा तु प्रतिमन्त्रव्यवस्थया। जपं निमीलिताक्षेण कुर्यान्मन्त्रं तु वाचकम्।

---

१. नि० उ०, पृ० ११६-११७ स्थिता टिप्पणी, "सिद्ध और सहजयान" इति शीर्षकोऽस्मदीयो हिन्दीनिबन्धश्च द्रष्टव्यः।

२. धारणापञ्चकमेतत् तत्र समाधिख्यापने दशमे पटले श्लो० २६-५४ द्रष्टव्यम्। अत्र वैष्णवागममीमांसास्थिता ६६ संख्याका टिप्पणी च द्रष्टव्या।

वाच्यस्य प्रतिपत्त्यर्थं पिण्डबीजपदात्मकम् ॥ त्रिविधं वै समुद्दिष्टं [1]प्रागुक्तविधिभावितम् । योगोऽपि त्रिविधः प्रोक्तस्तं च कार्त्स्न्येन मे शृणु ॥ प्राकृतं पौरुषं चैव ऐश्वर्यं च तृतीयकम् । अहस्तु कीर्त्यते तर्कस्तच्च सिद्धिविचारकम् ॥ समाधिस्त्वात्मलाभः स्यादात्मजः परिकीर्तितः । तत्तु लक्ष्यं परित्यज्य मन्त्रोच्चारणवर्जितम् ॥ सदा विभज्यते ब्रह्मन् कलांशविधिवर्जितम् । समाधौ परिनिष्पन्ने परमाप्नोति पुरुषम् ॥" (३३/६-१५) इति ।

मृगेन्द्रागमयोगपादे च तान्येवं लक्ष्यन्ते—"प्राणः[2] प्रागुदितो वायुरायामोऽस्य प्रखेदनम् । प्रेरणाकृष्टिसंरोधलक्षणं ऋतुदोषनुत् ॥ ततः सुखलवास्वादे तेषां वृत्तस्य चेतसः । प्रत्याहारो विधातव्यः सर्वतो विनिवर्तनम् ॥ तेनेन्द्रियार्थसंसर्गविनिवृत्तेश्चितो मतिः । धारणायोग्यतामेति पदे स्वेच्छाप्रकल्पिते ॥ चिन्ता तद्विषया ध्यानं तच्चादिष्टं मुहुर्मुहुः । तदेकतानतामेति स समाधि विधीयते ॥ जपस्तद्भाषणं ध्येयसम्मुखीकरणं मुने । अहोऽभिर्वीक्षणं वस्तुविकल्पानन्तरोदितः (१/४-८) इति । जयाख्यसंहितायां मृगेन्द्रागमे च प्रतिपादितं जपं योगं च परित्यज्य षडङ्गो योगो वैष्णवेषु शैवेषु शाक्तेषु बौद्धेषु च तन्त्रेषु प्रतिपाद्यते । तद्यथा—

प्राणायामोऽथ पूर्वं तु प्रत्याहारोऽथ धारणा । ततस्तर्कः समाधिश्च ध्यानं चाङ्गानि षट् क्रमात् ॥" (३०/५७-५८) इति पाञ्चरात्रागमीयविष्णुसंहितायाम्, "प्राणायामस्तथा-ध्यानं प्रत्याहारोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥" (आ० ४, पृ० १५) इति तन्त्रालोकविवेकधृतागमवचने, "प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥" (पृ० १२७) इति भगवद्गीताभास्करभाष्ये, "प्रत्याहार-स्तथा ध्यानं प्राणायामोऽथ धारणा ।[3] अनुस्मृतिः समाधिश्च षडङ्गो योग उच्यते ॥" (१८/१४०) इति गुह्यसमाजाख्ये बौद्धतन्त्रे च षडङ्गो योगः प्रतिपादितः । गुह्यसमाजोक्तः षडङ्गो योगोऽन्येषामपि बौद्धतन्त्रग्रन्थानां साहाय्येन सम्यग् व्याख्यातो गुरुभिः स्वकीयस्य "भारतीय संस्कृति और साधना" इत्याख्यस्य ग्रन्थस्य प्रथमे भागे (पृ० ५३७-५४०) इति नात्र तदुच्यते । विष्णुसंहितायां च तान्येवं लक्षितानि—"प्राणानां यस्त्विहायामः क्रमादेवं प्रकीर्तितः । सर्वशास्त्रेषु शास्त्रज्ञैः प्राणायामः स उच्यते । नाभ्यादिषु यथोद्दिष्टं बीजं भूत-गुणात्मकम् ॥ क्रियाभिर्धार्यते याभिस्तत्क्रिया धारणा मता ॥ अन्वयव्यतिरेकाभ्यां यस्माद् यदुपलभ्यते । धारणादिषु कालेषु स तर्कः संप्रकीर्तितः ॥ अविपर्याप्तिरूपेण यथाकर्म गुणात्मकम् । समाधिश्चेह विज्ञेयो धारणाभिस्त्रिभिस्त्रिभिः । ध्यातृध्येयस्वरूपं यत् तत्र सन्ध्यात् प्रदर्शनम् ॥ समाधित्रिगुणं यावदेवं ध्यानस्य लक्षणम् ।" (३०/६१-६२, ६८-७२) इति ।

---

१. जपस्य त्रैविध्यमेतत् तत्र जपविधानाख्ये चतुर्दशे पटले श्लो० ३-४ निदिष्टम् । अत्र वैष्णवागम-मीमांसास्थिता ६२ संख्याका टिप्पणी च द्रष्टव्या ।

२. अत्रैव विद्यापादे ११ पटले २०-२७ श्लोकेषु प्रतिपादितमेतत् ।

३. अभिवीक्षणमूहस्तर्कोऽनुस्मृतिरित्येते सर्वे शब्दा एकार्थवाचकाः । अनुस्मृतिपदविवरणं "बौद्धधर्मदर्शन" इत्याख्यस्य ग्रन्थस्य पञ्चमेऽध्याये द्रष्टव्यम् ।

"अहस्तु कीर्त्यते तर्कः" (३३/१३) इति जयाबचनानुसारमूह एव तर्क इत्युच्यते। जयरथोऽपि तथैव व्याख्याति। वीक्षणमभिवीक्षणम् ऊह इति मृगेन्द्रागमोऽप्यत्रानुकूलः। बौद्धे पालिवाङ्मये वर्णिताऽनुस्मृतिरभिवीक्षणतया व्याख्यातुं शक्यते। भगवद्गीतायां रामानुजभाष्येऽपोहनशब्द एवं व्याख्यायते—"अपोहनम् ऊहनं वा। ऊहो नामेदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम्" (१५/१५) इति। विष्णुसंहितावर्णितं लक्षणमपि तदेव वक्ति। निरुक्ते—"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति। तेभ्य एनं तर्कमृषिं प्रायच्छन्" (१३/१२) इत्येवं वर्ण्यते तर्कस्य महिमा। "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥" (१२/१०६) इति च मनुस्मृतौ स्मर्यते। अत एव—"योगाङ्गत्वे समानेऽपि तर्को योगाङ्गमुत्तमम्" इति तद्विषये भाष्यते मालिनीविजयोत्तरे (१७/१८), तन्त्रालोके (४/१५) च। व्याख्याकारो जयरथो विविधैः शास्त्रीयैः प्रमाणवचनैः शास्त्रानुरोधिनं सत्तर्कं प्रतिष्ठापयति। सत्तर्कस्यास्य हि साहाय्येन सम्बन्धे सावधानो[1] योगी चतुर्थीमनुपायप्रक्रियामालम्ब्य स्वस्वरूपमाविशति।

## पीठस्वरूपविमर्शः

कौलिकेषु शाक्तेषु बौद्धेषु च तन्त्रेषु वर्तते पीठानां महनीयं माहात्म्यम्। पीठानि महासंविदुपलब्धिस्थानानि भवन्ति। पीठसम्बन्धिविचारो डॉ० दिनेशचन्द्रसरकारनिबद्धे "दी शाक्त पीठाज्" इत्याख्ये निबन्धग्रन्थे विस्तरेणोपलभ्यते। अत्र विदुषा लेखकेन महापीठनिरूपणाभिधस्य पीठनिर्णयनाम्नो लघुकायस्य ग्रन्थस्य सम्पादनप्रसङ्गेन नानाग्रन्थसाहाय्येन पीठसंख्यास्थानादीनां सुविशदो विवेकः समुपस्थापित इति तत्त एवावलोकनीयं मनीषिभिः। ततो यद्विशेषस्तदत्रोच्यते। पीठेषु हि समाराधनं सहजं शतगुणितं च भवतीति हि शास्त्रेषु वर्ण्यते।

तन्त्रालोके (१५/८२-९६) तद्विवेके च नैशसंचारप्रामाण्येन पीठोपपीठसन्देहोपसन्दोहक्षेत्रोपक्षेत्राणि वर्णितानि। शास्त्रेषु सदा यागयोग्यं स्थानं पीठनाम्नाऽभिधीयते। तच्च बाह्याभ्यन्तरभेदेन बहिर्देशे च विराजते। तद्यथा—भगवतः शिवस्येच्छाशक्तिरेव पीठभावमयते। सचराचरस्य जगत आधारभूतं तत्, अत एव तस्याः शक्तेर्नैमित्तिकमिदमभिधानं पीठमिति। शक्तिपीठाद् बिन्दुनादमयं पीठद्वयं जायते। बिन्दुपीने वामभागे, दक्षिणे च नादपीठः। एवं पीठत्रयं निष्पद्यते। शक्तिपीठं कामरूपं प्रथमम्, दक्षिणे नादपीठं पूर्णगिरिः, उत्तरे च बिन्दुपीठमुड्डियानाख्यम्। एवमेतत् पीठत्रयं मुख्यम्। शक्तिपीठात् कौण्डलीपदमध्यमं शाक्तम्, बिन्दुपीठाच्चतुष्कलमगोलकं बैन्दवम्, नादजं च व्याप्त्यधो द्विरन्ध्रस्योर्ध्वगमित्युपपीठानां त्रयी निष्पद्यते। देवीकोट्टं शाक्तम्, उज्जयिनी बैन्दवम्, कुलगिरिश्च नादजमुपपीठम्। ललनागर्तवर्ती शाक्तः सन्दोहः, पुटमध्ये बैन्दवः, व्याप्तिमध्ये च नादजः। ललनायां पुण्ड्रवर्धन-

---

1. "योगिनां तु विशेषोऽयं सम्बन्धे सावधानता" श्लो० १०४ इति विज्ञानभैरवश्लोकोऽत्र परामृष्टव्यः।

संज्ञः, पुटमध्ये वारेन्द्राख्यः, व्याप्तिमध्ये चैकाम्राख्यः सन्दोहो भवति। हृदम्भोजदलाष्टकं क्षेत्राष्टकमभिधीयते। प्रयागः, वरणा, अट्टहासः, जयन्तिका, वाराणसी, कालिङ्गम्, कुलूता, लाहुला इति तेषां नामानि। हृदम्भोजदलाग्राष्टकमुपक्षेत्राष्टकम्। विरजा, ऐसाडिका, हाला, एलापुरम्, क्षीरिका, राजपुरी, मायापुरी, मरुदेश इति तेषामभिख्याः। हृत्पद्मदलसन्ध्यष्टकमुपसन्दोहाष्टकं जालन्धर-नैपाल-कश्मीर-गर्गिका-हर-म्लेच्छदिग्द्वारवृत्ति-कुरुक्षेत्र-खेटकाख्यम्।

देहे द्विपथ-त्रिपथ-चतुष्पथा अपि भवन्ति। वामदक्षाभ्यां नाड्योर्वाहः प्रथमः, परया सह मेलनाद् द्वितीयः, तृतीयश्च शक्तिमतो लयाद्भवति। चतुष्पथश्चायं स्थानचतुष्टयेऽवतिष्ठते। व्याप्त्यधः पिण्डस्थाने प्रथमः, तालुमध्ये द्वितीयः, चूलिकाग्रे तृतीयः, चतुर्थश्च भ्रूमध्ये विराजते। नासान्ततालु-चूलिकाग्राख्यं स्थानत्रयं शाम्भवं धाम, नाभि-कन्द-महानन्दाख्यं शाक्तं धाम, भ्रूमध्य-कण्ठ-हृत्संज्ञमाणवं धाम। एतदेव पर्वताग्रं नदीतीरम् एकलिङ्गं चोच्यते। किं बहुना, संवित्तौ सर्वमवतिष्ठते। संविदेव प्राणात्मना परिणमते, स च देहेऽवतिष्ठत इति सर्वमपि देह एव भावनीयम्। योगमार्गविशारदाः संविद्देव्यो बहिरनुग्रहनिमित्तं तत्तत्स्थानेष्वभिव्यज्यन्त इति तद्बाह्यं पीठमुच्यते।

एवमत्र पीठोपपीठसन्दोहानां त्रिकत्रयम्, क्षेत्रोपक्षेत्रोपसन्दोहानामष्टकमयं च निरूपितम्। आहत्य त्रयस्त्रिंशत्स्थाननामान्यत्र दृश्यन्ते। ज्ञेयसंकल्पनारूपमर्धपीठं तन्त्रालोके वर्ण्यते। विवेककारेण तु तन्नाङ्गीकृतम्। [1]तदावश्यकमिति वयं भणामः। नाम तु तस्यात्र नोपलभ्यते। तच्च [2]अर्बुदमिति कौलज्ञाननिर्णयतो ज्ञायते। पीठोपपीठसन्दोहक्षेत्रोपक्षेत्रपदान्यपि तत्रोपलभ्यन्ते (पृ० २४)। नामानि तु केवलं कामाख्या-पूर्णगिरि-ओडियानपीठानाम् (पृ० २४), अर्धपीठस्यार्बुदस्य (पृ० २४), करवीर-महाकाल-देवीकोट्ट-वाराणसी-प्रयाग-चरित्र-एकाम्रक-अट्टहास-जयन्तीक्षेत्राणां (पृ० २३) दृश्यन्ते। अत्र क्षेत्रपदस्य स्थाने [3]क्षत्रपदपाठो लिपिभ्रंशादित्यवगन्तव्यम्।

तन्त्रालोके एकोनत्रिंशाह्निके पीठन्यासादिप्रसङ्गेऽपि पीठनामानि दृश्यन्ते। तद्यथा—
अट्टहासं शिखास्थाने चरित्रं च [4]करन्ध्रके। श्रुत्योः कौलगिरिं नासारन्ध्रयोश्च जयन्तिकाम्॥

---

१. जयरथोपपादिता उपसंहारविरुद्धत्व-अनागमित्व-अनार्षत्वदोषा नात्र प्रवर्तन्ते। उपसंहारे नवधेति पदेन पीठानामेव परामर्शः, न त्वर्धपीठस्यार्बुदस्यापि। अर्बुदस्यार्धपीठत्वे आगमस्तु कौलज्ञाननिर्णयोऽनुपदमेव संवाद्यते। अत एवानार्षत्वमपि दूरापास्तम्।

२. 'अर्बुदमर्धपीठं तु" ८/२२ इति।

३. नानास्थलेष्वेवमेव लिपिदोषादिभिर्भ्रष्टोऽप्ययं ग्रन्थो निर्विचिकित्सं प्राचीनत्वात् तदानीन्तनानां कौलिकसिद्धान्तानां परिज्ञानाय नितान्तमुपादेय इति साम्प्रदायिकैस्तन्त्रालोकादिसाहाय्येन संशोध्य पठनीयः।

४. "करन्ध्रं ब्रह्मबिलमिति यावत्" त० वि० २९/८८ इति।

भ्रुवोरुज्जयिनीं वक्त्रे प्रयागं हृदये पुनः । वाराणसीं स्कन्धयुगे श्रीपीठं विरजं गले ॥ एडाभी-मुदरे हालां नाभौ कन्दे तु गोश्रुतिम् । उपस्थे मरुकोशं च नगरं पौण्ड्रवर्धनम् ॥ एलापुरं पुरस्तीरं सक्थ्यूर्वोर्दक्षिणादितः । कुड्याकेशीं च सोपारं मायापूः क्षीरके तथा ॥ जानुजङ्घे गुल्फयुग्मे त्वाम्रातनृपसद्मनी । पादाधारे तु वैरिञ्चीं कालाग्न्यवधि धारिकाम् ॥" (२९/५९-६०) इति । शिखास्थाने द्वादशान्ते, हालामिति अलिपुरम् गोश्रुतिमिति गोकर्णम्, नृपसद्म राजगृहम्, वैरिञ्चीमिति ब्रह्माणीं श्रीशैलाख्यं तु तत्पीठमित्यर्थ इति जयरथः ।

एवमेव तत्रैव नवयागप्रसङ्गे विवेकोद्धृतमाधवकुलग्रन्थे—"मातङ्गीवेश्म सुभगे प्रयागं परिकीर्तितम् । कज्जली वरुणाख्यं तु सौनीकुलगिरिः प्रिये । कार्मुकी चाट्टहासं च जयन्ती चर्मकारिणी । चरित्रं ध्वजिनी प्रोक्तमेकाम्रास्थिविदारणी ॥ देवीकोट्टं धीवरी तु हिरण्यपुरमेव च । नवमं चक्रिणीपीठं यत्सुरैरपि दुर्लभम् ॥" (पृ० ४६-४७) इति नवस्थानानि दृश्यन्ते । इमानि च [1]कौलज्ञाननिर्णयधृतनवक्षेत्रनामतः प्रायशोऽभिन्नानि । करवीरोऽत्र कुलगिरिपदेन, वाराणसी च वरुणापदेनोक्त इति प्रतीयते । महाकालो हिरण्यपुरमिति भिन्ने नामनी । अन्यानि नामान्युभयत्र समानानि ।

तन्त्रालोकस्यास्मिन्नेवाह्निके षण्णां राजपुत्राणां मुद्राछुम्मादिप्रतिपादके प्रकरणे जयरथेन कुलक्रीडावतारग्रन्थ उद्धृतः । तत्र तेषां निकेतनान्येवं दृश्यन्ते—"त्रिपुरोत्तरे निकेतं सिद्धिस्थानं च तद्विदुः । अमरस्य वरारोहे वरदेवस्य कामरुः ॥ चित्रस्य अट्टहासं वै देवीकोट्ट-मलेस्तथा । दक्षिणं चैव विन्ध्यस्य गुडिका गौलगिर्यता ॥" (पृ० २८) इति । एवं चात्र पीठषट्कं राजपुत्रषट्कस्य निकेतनस्थानीयमुपदिश्यते ।

बौद्धमतीये हेवज्रतन्त्रे प्रथमकल्पस्य सप्तमे पटले [2]पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्देह-मेलापकोपमेलापकपीलवोपपीलवश्मशानोपश्मशानभेदेन द्वादशभूमयो निरूपिताः । तद्यथा--"पीठं जालन्धरं ख्यातमोड्डियानं तथैव च । पीठं पूर्णगिरिश्चैव कामरूपं तथैव च ॥ उपपीठं मालवं प्रोक्तं सिन्धुर्नगरमेव च । क्षेत्रं मुन्मुनि प्रख्यातं क्षेत्रं कारुण्यपाटकम् ॥ देविकोटं तथा क्षेत्रं क्षेत्रं कर्मारपाटकम् । उपक्षेत्रं कुलटा प्रोक्तमर्बुदश्च तथैव च ॥ गोदावरी [3]हिमाद्रिश्च उपक्षेत्रं हि संक्षिपेत् । सन्दोहं हरिकेलं च लवणसागरमध्यजम् ॥ लम्पाकं काञ्चिकं चैव सौराष्ट्रं तथैव च । कलिङ्गमुपसन्दोहं द्वीपं चामीकरान्वितम् ॥ को(ङ)कणं चोपसन्दोहंसमा सेनाभिधीयते । पीलवं च ग्रामान्तस्थं पीलवं नगरस्य च ॥ चरित्रं कोशलं चैव बिन्ध्या कौमारपौरिका । उपपीलवं तन्सन्निवेशो वज्रगर्भ महाकृप ॥ श्मशानं प्रेतसं (हा ? घा) तं श्मशानं चोदधेस्तटम् ।

---

१. द्रष्टव्यं तत्र ८/१६-१७, पृ० २३

२. अत्र मुद्रितपुस्तके छन्दोहोपछन्दोहेति लिपिदुष्टः सम्प्रदायदुष्टो वा पाठः ।

३. 'हि माद्रिश्च' इति मुद्रितः पाठो मुद्रणाशुद्धिजः ।

उद्यानं वापिकातीरमुपश्मशानमुच्यते ॥" (१/७/१२-१८) इति । [1]अत्रत्यः पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहविभागस्तन्त्रालोकेऽपि वर्णितः । "क्षेत्रं मेलापस्थानम्" (त० वि० ४) इति जयरथः । अत्र तु मेलापकोपमेलापकौ पृथक् परिगण्येते । तयोर्भेदास्तु न प्रदर्शिताः । पीलवशब्दः परिज्ञानेषु संस्कृतकोशग्रन्थेषु क्वापि नोपलभ्यते । स्वच्छन्दतन्त्रे तदुद्योते च (२) कामरूपोज्जयिनीकाश्मीरकाञ्चीकरवीरदेवीकोट्टोड्डियानहिरण्यपुरासिन आमर्दक-अग्निक कालाख्य-एकपाद-त्रिपुरान्तक-अग्निजिह्वकरालि-भीमवक्त्राख्या अष्टौ श्मशानेशाः प्रकीर्तिताः ।

तन्त्रालोके कौलज्ञाननिर्णये च पीठत्रयमेव दृश्यते । तत्र जालन्धरं न परिगणितम् । तन्त्रालोके उपसन्दोहाष्टके जालन्धरं परिगण्यते । हेवज्रतन्त्रे तु पीठचतुष्टयेषु तस्य प्राथम्यम् । अनेनैतदुन्नेतुं शक्येत यज्जालन्धरस्य पीठेषु समावेशः पश्चात्कालिक इति । साधनमालाख्ये बौद्धतन्त्रसंग्रहग्रन्थे उड्डियान-जालन्धर-कामरूप-श्रीहट्टाख्याश्चत्वारः पीठाः प्रदर्शिताः । अत्र पूर्णगिरिपीठस्य स्थाने श्रीहट्टस्य समावेशः । एष विभागो नैव प्रचारमलभत । कामरूप-पूर्णगिरि-जालन्धर-उड्डियानाख्यचतुष्पीठविभाग एव सार्वत्रिकः समुपलभ्यते साम्प्रतम् । नित्याषोडशिकार्णवे योगिनीहृदये चायमेवाङ्गीकृतः । व्याख्यातं च तथैव व्याख्याकारैः सर्वैः । अर्थरत्नावल्याम् ओजापूकास्पर्शाख्यं पीठपञ्चकमुदटङ्कि (पृ० ११) अर्थरत्नावल्युद्धृते उत्तरषट्कशास्त्रे तु कामरूपकोल्लगिरि-सोपार-उड्डियान-मलयगिरि-कुलान्तक-जालन्धरदेवीकोट्टाख्यान्यष्टौ पीठानि दृश्यन्ते । ईशानशिवगुरुदेवपद्धत्यां मन्त्रपादे (१५/४१;१७/६), ज्ञानार्णवतन्त्रे (४/६६-६७) च पठितान्येतानि ।

योगिनीहृदये (३/३७-४३) पीठन्यासप्रसङ्गे, प्रपञ्चसारप्रयोगक्रमदीपिकायां (पृ.५७९) च योगिनीन्यासविधौ एकपञ्चाशत्पीठनामानि परिगणितानि । तान्येतानि ज्ञानार्णवेऽपि (१४/११४-१२३) सन्ति । तत्र तेषां संख्या पञ्चाशदेव । "ज्ञानार्णवे पञ्चाशच्छब्दोऽप्येकपञ्चाशत्परः" (पृ. २१३) इति योगिनीहृदयसेतुबन्धे वदन् भास्कररायस्तथैव ज्ञानार्णवग्रन्थं संवादयति, तदुचितमेव । ज्ञानार्णवापेक्षया योगिनीहृदयं प्राचीनमित्यन्यत्र प्रतिपादितमस्माभिः । स्वल्पेन पाठभेदेन सह योगिनीहृदयस्यैव नामावली दृश्यतेऽत्र । पूर्वतन्त्रालोकादिषूद्धतानां प्रायः सर्वेषामेव पीठोपपीठादीनां समाहारोऽत्र सम्पद्यते ।

---

१. हेवज्रतन्त्रसम्पादकेन ग्रन्थस्यानुवादखण्डटिप्पणीषु प्रदर्शितं यत् पीठसम्बन्धी विचारो डॉ० बागचीमहोदयेन दोहाकोशे पृ० ११३, प्रो० टुच्चीमहोदयेन च "इण्डो—तिबैटिका' III २, पृ० ३८-४५ इत्यत्र कृत इति । पुस्तकद्वयमेतद् दृष्टमस्माभिः कलिकातास्थराष्ट्रीयपुस्तकालये एशियाटिकसोसाइटीपुस्तकालये च । तत्र—"क्षेत्रोपक्षेत्रादि सर्वं हि चतुर्विंशतिस्थानानि" पृ० ११३ इति प्रथमे पुस्तके दृश्यते । "चतुर्विंशतिभेदेन पीठाद्यत्रैव संस्थितम् । अतस्तद्ग्रहणार्थेन खेदः कार्यो न तात्त्विकैः ॥" पृ० ११४ इति च तत्रैव टीकायाम् । द्वितीये च पुस्तके चित्तमण्डल-वाङ्मण्डल-कायमण्डलवर्तीनि क्रमेण मलय-जालन्धर-उड्डियान-अर्बुद-गोदावरी-रामेश्वर-देवीकोट्ट-मालवाख्यानि, कामरूप-चम्पा उट्रतिस्कुन-कोशल-कलिङ्ग-लम्पाक-काञ्ची-हिमालयाख्यानि, प्रेतपुरी-गृहदेवता-सौराष्ट्र-सुवर्णद्वीप-नागरसिन्धु-मेरु-कुलूताख्यानि चाष्टकत्रयात्मकान्याहृत्य चतुर्विंशतिस्थानानि प्रदर्शितानि ।

शारदातिलकटीकायां राघवभट्टेन "अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम् ।" (१/८५) इत्यस्य व्याख्यानप्रसङ्गे चतुष्षष्टिपीठप्रतिपादकं श्लोकत्रयमुद्धृतम् । तद्यथा—"मायामङ्गलनागवामनमहालक्ष्मीचरित्रा भृगुच्छायाच्छत्रहिरण्यहस्ति-महेन्द्रोड्डीशचम्पापुरम् । षष्ठक्षीरकमञ्जनेश्वरपुरैलाश्चन्द्रपूः श्रीगिरिः कोलाकुल्लकपूर्णपर्वतकुरुक्षेत्रैकलिङ्गार्बुदाः ॥ काश्मीरैकाम्रकाञ्चीमलयगिरिवरैकारकन्धूलदेवीकोट्टाम्रातेशजालन्धरसुरभिमनीषाद्रिकाशी—प्रयागाः । त्रिस्रोतः कामकोट्टोज्जयिनीसमथुरं कोशला कान्यकुब्जोड्यानौङ्काराट्टहासा विरज इह ततः कुण्डिनं राजगेहम् ॥ नेपालपुण्ड्रवर्धनसालवपरसीरकामरूपकेदाराः । विन्ध्यमहापथगोश्रुतिकाम्पिल्यश्रीपीठमरुदेशाः ॥ "(पृ. ५२-५३) इति । अर्थरत्नावल्यां (पृ.७४) पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहशब्दा दृश्यन्ते । परवर्तिनि काले विभाग एष नाङ्गीकृतः, सर्वाणि च तानि स्थानानि पीठपदकुक्षिनिक्षिप्तान्यभूवन् ।

"वाराणस्यां विशालाक्षी" इत्यादिना "इमान्यष्टशतानि स्युः पीठानि जनमेजय" (७) इत्यन्तेन ग्रन्थेन देवीभागवतेऽष्टोत्तरशतपीठानि वर्ण्यन्ते । एषैव नामावली पाठभेदेन सह मत्स्यपुराणेऽपि (१३/२६-५४) दृश्यते । तत्र प्रकरणमेतत् "अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम्" १३। इत्येवमुपसंह्रियते । देव्या अष्टोत्तरशतं स्थानानि—"कोलापुरं महास्थानम्" इत्यादिना "प्रोक्तानीमानि स्थानानि देव्या प्रियतमानि च" (७/३८/५-३१) इत्यन्तेन ग्रन्थेन देवीभागवते-स्थलान्तरे वर्णितानि । अष्टोत्तरशतं दिव्यदेशा वैष्णवाः श्रूयन्ते । सिद्धान्तागमेषु चतुर्विंशत्युत्तरद्विशतसंख्याकानि (२२४) भुवनानि[1] भवन्ति । अत्रत्येषु पीठनामसु कानिचनाट्टहास-गोकर्ण-कुरुक्षेत्र-आम्रातकेश्वरश्रीशैलप्रभृतीनि नामानि तत्राप्यवलोक्यन्ते । एवमत्र प्रतीयते यत्पूर्वं तेषु-तेषु शाक्तेषु सम्प्रदायेषु तानि तानि तन्त्रप्रधानानि पूजास्थानानि तत्तदाचार्याविर्भावस्थलानि वा तरतमभावेन पीठोपपीठादिनाम्ना प्रथितान्यभूवन् । कालक्रमेण तेषां वैशिष्ट्यं विस्मृतिं जगाम, शैवानि वैष्णवानि च तीर्थानि तत्र समावेशितानि । साम्प्रतं विभिन्नेषु ग्रन्थेषु पठितानि पीठनामानि पञ्चशताधिकानि भवन्ति । तान्यक्षरक्रमेण यथासम्भवं स्थापितानि "दी शाक्त-पीठाज्" इत्याख्ये ग्रन्थे। अस्यां सूच्यां तन्त्रालोकादिषूपरिपठितेषु ग्रन्थेषूद्धृता निकुलूता-लाहुला-एडाभी-ऐरुडिका-कुड्याकेशी-खेटक-गर्गिका-प्रभृतीनि नामानि नोपलभ्यन्ते । पीठनामान्येतानि शक्तिसंगमतन्त्रे वर्णिता षट्पञ्चाशद्देशव्यवस्था प्रस्थव्यवस्था च भारतस्य विस्तृतं भूगोलपरिधिं सूचयन्ति। हन्त ! प्राचीनान्यनेकानि स्थानानि साम्प्रतं विस्मृतिगर्ते पतितानि । बहिःस्थं सर्वमपि देह एव भावनीयमिति भावनाप्रवणैः प्रधानतमेषु पीठचतुष्टयेषु जालन्धरपूर्णगिरिपीठयोः द्वादशज्योतिर्लिङ्गेषु च द्वित्राणां यदा निश्चिता स्थितिर्नावबुद्ध्यते तदा का कथा एकपञ्चाशतां चतुष्षष्टीनामष्टोत्तरशतपीठानां वा निश्चितायाः स्थितेः ।[2] अत्र धर्मभीरुभिः साम्प्रदायिकैरवश्यं यतनीयम् ।

---

१. तन्त्रयात्रायां मुद्रिते "वैष्णवेषु" इत्याख्ये निबन्धे पृ० २६-२७ भुवननामानीमानि द्रष्टव्यानि । स्वच्छन्दतन्त्र-ईशानशिवगुरुदेवपद्धति-तन्त्रालोक-रत्नत्रयादयो ग्रन्थाश्च परिशीलनीयाः ।]

२. बौद्धानां "महामायूरी" इत्याख्ये ग्रन्थे यक्षाणां तद्गमतीनां च विस्तृता नामावली वर्तते । ग्रन्थ एष

## उपसंहारः

एवमत्रास्मभिस्त्रिविधभेदभिन्नस्यागमशास्त्रस्य संक्षिप्तः परिचय ऐतिहासिक-दार्शनिक-सांस्कृतिकवैशिष्टयप्रतिपादनपुरस्सरं समुपस्थापितः। श्रद्धेयचरणैः कविराजमहोदयैः सन्दृब्धेन "तान्त्रिक साहित्य" इत्याख्येन ग्रन्थेनास्य सम्पूर्णस्य वाङमयस्य विशालता किञ्चिदिव परिलक्ष्यते। तदेतद्विशालं वाङमयं विस्मृतिगर्ते निपतितमिव, विद्वद्भिरुपेक्षितमिव साम्प्रतमास्ते। येन हि विना बौद्धमहायानवज्रयानयोः, जैनधर्मस्य, पौराणिकधर्मस्य च विकासक्रमो नैव याथार्थ्येन ज्ञातुं शक्यते। बौद्धजैनधर्मयोः स्वरूपपरिवर्तने पौराणिकधर्मस्य प्रतिष्ठायां च कियान् वर्तते नाम आगमिकस्यास्य वाङ्मयस्य प्रभाव इति नाद्यावध्यवधारितम्। दक्षिणे भारते वैष्णवानां शैवानां च भक्तानाम्, उत्तरे भारते सिद्धानां नाथानामन्येषां च भक्तानाम्, इस्लाममतानुवर्तिनां सूफीभक्तानां च वाङ्मयस्याध्ययनं साम्प्रतं वेदान्तस्य पौराणिकवाङ्मयस्य वा छत्रच्छायायां विधीयते। किन्तु शाङ्कराद्वैतमपहाय वेदान्तस्य सर्वाः शाखा वैष्णवैः शैवैश्चागमैः प्रभाविताः, वैष्णवानां शैवानां सिद्धानां नाथानां च वाङमयं तानेतानागमग्रन्थानेव सार्वात्म्येनानुसरतीति इदम्प्रथमतया श्रद्धेयैः कविराजमहोदयैर्मौखिकेषूपदेशेषु निबन्धेषु च वितानितम्। सूफीमतमपि शाङ्कराद्वैतदर्शनापेक्षया शैवं प्रत्यभिज्ञादर्शनमद्वैतवादिनं शाक्तं च दर्शनं वस्तुतोऽनुधावतीति ते प्रत्यपीपदन्। वज्रयानसहजयानयोः शाक्तदर्शनानुस्यूततामपि ते निर्दिष्टवन्तः। वेदोत्तरकालीनस्य सम्पूर्णस्य भारतीयस्य वाङ्मयस्य तैर्निर्धारितेनानेन पथा परिशीलनं नितान्तमपेक्षितम्।

उपासनाविधौ कर्म-योग-ज्ञानानामपेक्षया भक्तेर्गरीयस्त्वख्यापनं नामास्य शास्त्रस्य विशिष्टः सिद्धान्तः। आलवार-अलियार-सिद्धनाथ-सन्तप्रभृतीनामुपदेशेषु तदेतस्य चूडान्त उत्कर्षो द्रष्टुं शक्यते। एतदेव तत्पाथेयमासीद् येन किल परतन्त्रतावेलायां राष्ट्रमेतत् स्वीयां संस्कृतिं साहित्यं भाषां च ररक्ष। साम्प्रतिको गांधिवादो भक्तिधाराया एव नूतना परिणतिः। विश्वसिमो वयं यदजस्रं प्रवहन्त्यां भारतीयसंस्कृतिपरम्परायामद्यापि वर्तते जीवनदायिनी सा शक्तिर्यया न केवलं नूतनभारतराष्ट्रस्य निर्माणायाखण्डायाः संस्कृतेः, अपितु साम्प्रतिकस्य जाति-भाषाराज्य-राष्ट्रादिसंकुचितभावनाग्रस्तस्य कलहायमानस्य विनाशोन्मुखस्य मानवस्य त्राणाय विश्वसंस्कृतेरपि द्वाराण्युद्घाटितानि स्युरिति। प्रायः साम्प्रतिके जगति वर्तमानानां सर्वेषां धर्माणामनुयायिनो जना निवसन्त्यत्र भारते वर्षे। आगममीमांसायामस्यां व्याख्यातप्रायया आगमिक्या भक्तिधारया सूफीसम्प्रदायस्य, ख्रीष्टीयसम्प्रदायस्य, यहूदीसम्प्रदायस्य च भक्तिधाराणां समन्वयेन विकासं लम्भिता भारतीया संस्कृतिर्विश्वसंस्कृतितो नातीव भिन्ना स्यादिति शम्।

**आगमत्रयमीमांसा व्रजवल्लभशर्मणा।**
**कृता निःश्रेयसे भूयात् सर्वेषामभयाय च ॥**



---

"सिनो इण्डियन स्टडीज" भा० ३, सं० १-२, पृ० १३-८७; अप्रैल-जुलाई १९४७ इत्यत्र मुद्रितः। ग्रन्थस्यास्य सम्पादकेन डॉ० प्रबोधचन्द्रवागचीमहोदयेन स्थानपरिचयादिषु महदायस्तम्। पीठनाम्नां तत्स्थानानाम्, दिव्यदेशभुवनादीनां च निर्णयार्थैतत्साहाय्येन प्रयतनीयम्।

# अस्माकमभिनवानि प्रकाशनानि

**१—काश्मीरेतिहासः** **ले० स्व० आ० श्रीहनुमत्प्रसादशास्त्री, पण्डित-मार्तण्डः**

अयमितिहासग्रन्थो महाकविकल्हणरचिताया 'राजतरङ्गिण्याः' परम्परायाः पूरको मन्यते। काश्मीरस्य नैसर्गिकश्रिय आरभ्य भूपतीनां विदुषां तथा वर्तमानकालस्य स्थितेर्यथासम्भवं प्रामाणिक इतिहासोऽस्मिन् ग्रन्थे प्राञ्जलया संस्कृतभाषया प्रस्तूयायं सर्वाङ्गीणतां नीतः।

पृ० सं० ३१०, आकारः २०×२६ / १/८ मूल्यम् १५=००

**२—अध्वरमीमांसाकुतूहलवृत्तिः** **सं० विद्यासागरः पं० श्रीपट्टाभिरामशास्त्री**
(चतुर्षु-भागेषु)

'श्रीवासुदेवदीक्षित'-विरचितायामस्यां वृत्तौ श्रौतपदार्थानां समुचितं प्रतिपादनं तथाऽग्निहोत्र-दर्शपूर्णमास-सप्तसंस्थाक-ज्योतिष्टोमाद्यध्वराणां मीमांसाऽतीव सरसया शैल्या निरूपिता विद्यते। प्रत्येकं भागो विस्तृतया भूमिकया भूषितः सुसम्पाद्य प्रकाशितः।

| | | | | |
|---|---|---|---|---|
| भा० १ | पृ० सं० ६५४ | आकारः २०×२६/१/८ | मूल्यम् | ३०=०० |
| ,, २ | ,, ५१८ | ,, ,, | ,, | ३०=०० |
| ,, ३ | ,, ३२० | ,, ,, | ,, | १५=०० |
| ,, ४ | ,, ३१० | ,, ,, | ,, | ३१=०० |

**३—शास्त्रदीपिका** (१—२ भागयोः) **सं० विद्यासागरः पं० श्री पट्टाभिरामशास्त्रा**

म. म. पार्थसारथिमिश्रस्य शास्त्रदीपिकेयं मीमांसा-ग्रन्थेषु महत्त्वपूर्णा विद्यते। अस्याः 'प्रभा'नाम्नी व्याख्या श्रीमता तत्सद्-वैद्यनाथभट्टेन विरचिता। सव्याख्यायाः शास्त्रदीपिकायाः सम्पादनं मीमांसाशास्त्रनिष्णातैः श्रीमत्पण्डितप्रवर-पट्टाभिरामशास्त्रिभिर्महता परिश्रमेण विहितम्।

| | | | | |
|---|---|---|---|---|
| भा० १, | पृ० सं० ३२५ | आकारः २०×२६/१/८ | मूल्यम् | ५०=०० |
| ,, २, | ,, ,, ६५० | ,, ,, | ,, | ८०=०० |

**४—कृष्णयजुर्वेदीय-तैत्तिरीय-संहिता** (प्रथमो भागः)
(सायणभाष्य-हिन्द्यनुवादसमन्विता) **सं. अनु. स्व. म. म. पं. परमेश्वरानन्दशास्त्री**

भाष्यपद्धत्या हिन्दीभाषायामनूदिताना सायणभाष्यसहितकृष्णयजुर्वेदतैत्तिरीय-संहितायाः प्रथमो भागोऽयं प्रथमकाण्डस्थ-प्रथमप्रपाठकस्य पञ्चमानुवाकपर्यन्तं सुसम्पाद्य प्रकाशितः। अन्ये भागा अपि प्रकाशनार्थं सन्नद्धा वर्तन्ते। श्रीमन्महामहोपाध्यायैरनुवादेन सह शास्त्रीयाणां विषयाणां सरलीकरणाय वैदुष्यपूर्णाष्टिप्पण्योऽप्यत्र संयोजिताः सन्ति।

पृ० सं० ३२८ आकारः २०×३०/१/८ मूल्य ३२-००

— प्राप्तिस्थानम् —

**श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठम्**
अनुसन्धानप्रकाशन-विभागः,
**शहीदजीतसिंहमार्गः, नई दिल्ली—१६**